UGC - CARE LISTED

ISSN: 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A Refereed & Peer-Reviewed Quarterly Research Journal)

45 वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) 2020

प्रधानसम्पादकः

प्रो.रमेशकुमारपाण्डेयः

कुलपतिः

सम्पादकः

प्रो.शिवशङ्करमिश्रः

सहसम्पादकः

डॉ.ज्ञानधरपाठकः



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः

केन्द्रीयविश्वविद्यालयः

नवदेहली-16

UGC- CARE Listed ISSN : 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED & PEER- REVIEWED QUATERLY RESEARCH JOURNAL)

45 वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) 2020

प्रधानसम्पादकः

**प्रो.रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**प्रो.शिवशङ्करमिश्रः**

शोधविभागाध्यक्षः

सहसम्पादकः

**डॉ.ज्ञानधरपाठकः**

शोधसहायकः



**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**

नवदेहली-110016

प्रकाशकः

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**

कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली–110016



ISSN :- 0974 - 8946

45 वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) 2020 ई.



मुद्रकः – गणेशप्रिंटिंगप्रेसः, कटवारियासरायः नवदेहली–16

# शोधप्रभा
## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य
## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्ष जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका-टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशित-शोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्यान वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00 पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशि **कुलसचिवः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**, नई दिल्ली-16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः वा ई-बैंकमाध्यमेन देयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' शोध-प्रभा' श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, बी-4 कुतुब सांस्थानिकक्षेत्रम्, नव देहली-110016 इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

**संस्कृतिः संस्कृताश्रिता उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्ष तद् भारतन्नाम भारती यत्र सन्ततिः॥ आचारः परमो धर्मः। आचारहीनं न पुनन्ति वेदाः॥** इत्यादिदिव्यवचनैः संस्कृतेः संस्कृतस्य च वैशिष्ट्यं शास्त्रेषु पदे-पदे वर्णितम्।

भारतीयसंस्कृतौ संस्कारस्य महत्त्वपूर्णं स्थानं विद्यते। वस्तुतः कार्यसम्पादनयोग्यता संस्कारादेव जायते। अस्मादेव कारणात् भिन्नाः संस्काराः भिन्नानां कार्याणां योग्यताधानहेतवो भवन्ति इति प्रसिद्धिः। वेदविहितविविधकार्यसम्पादनार्थं विविधाः संस्काराः धर्मशास्त्रकारैः समुपदिष्टाः सन्ति। तेषु शिक्षासम्बन्धिनोऽपि नैके संस्काराः सन्ति। संस्कारानामभावात् विद्याभ्यासोऽपि अनुदिनं क्षीयते। सत्यप्यभ्यासे तत्र तेजस्वितायाः अभावः सुतरां दृश्यते। तेजस्विनी विद्या न केवलं विद्यावतामुपकारायापितु समाजस्य देशस्य च लाभाय जायते। विद्यावतां तु सर्वकार्यसिद्धिसूत्रं तु विद्यैव भवति। उक्तञ्चास्ति-

**श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि।**
**संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः॥**

आधुनिककाले भौतिकविज्ञानादिविषये प्रायः छात्राणां रुचिः जायते। इमाः सर्वाः विद्याः लोकोपकाराय किन्तु भौतिकजीवनमेवाधिकृत्य केवलम्। आध्यात्मिकजीवनविकासे मानवमूल्यविकासे च या विद्या अपेक्षिता सा भिन्नैव भवति। तस्याः विकासायैव 'षडङ्गो वेदोऽध्येतव्यः' इत्युद्घोषः महर्षिणां श्रूयते। वेदानामध्ययनं तदङ्गानां, तदुपकारकाणां शास्त्राणां सम्यक् परिशीलनेनैव भवति। 'वेदात्सर्वं प्रसिद्ध्यति' इति कथनस्येदमेव तात्पर्यं यत् ज्ञानस्य मूलं वेदेष्वेव प्रतिष्ठितमस्ति। तदेव ज्ञानं विविधेषु शास्त्रेषु भिन्न-भिन्नमार्गेण प्रकाशितं विलसति। शास्त्राणां माध्यमेन वैदिकज्ञानस्यैव परिप्रकाशः शनैः शनैः जायते।

संस्कृतस्य संस्कृतेश्च संरक्षणार्थं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-विश्वविद्यालयस्य त्रैमासिकी **''शोधप्रभा''** नाम्नीयं शोधपत्रिका निरन्तरं प्रकाश्यमाना विद्यते। प्रकृतोऽयमङ्कः पाठकेभ्यः समर्प्य अहं सर्वेषां पाठकानां सहयोगीनाञ्च मांगल्यमुपदिशे।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

## सम्पादकीयम्

संस्कृतं भारतस्य जीवातुभूतं तत्त्वम्। अस्यां भाषायां विराजते विपुलं ज्ञानवैभवम्। अस्मिन् वाङ्मयेऽनुस्यूतं सकलमपि जीवनमूल्यं, निखिलमपि व्यवहारतत्त्वम्। कथं वयं जीवामः? कथं वयमाचरामः? कथं वयं व्यवहरामः? किमस्त्यस्माकं लक्ष्यम्? किं कर्म? किमकर्म? किं हानम्? किमुपादेयमेतत् सर्वं सम्यगुपदिशति सुरभारती देववाणीसंस्कृतम्।

पुरा अस्माकं देशस्यासीत् किमप्यपूर्वं गौरवमिह जगति। तत्र हेतुरासीत् जनमानसे संस्कृतस्य व्यापकत्वेन प्रभावः। एतत्प्रभावादेव मौलिभूतं स्थानमासीदस्माकमिहावनितले। ऋषीणां वैशिष्ट्यं, मुनीनां महत्त्वं, गुरूणां गुरुत्वम्, आचार्यणामाचार्यत्वमेतत्प्रभावादेव प्रसिद्ध्यति। संस्कृतमन्तरा क्व संस्कृतिः? क्व संस्कारः? क्व सदाचारः? क्व च शुचिता इति?

संस्कृतस्य गुरुत्वादेवासीदास्माकं गौरवम्। इयमस्मान् प्रतिपदं संस्करोति शिक्षयति च कथं पितृभ्यां सह प्रभवामः? आचार्येण सह कथमाचरामः? भ्रातृभिः भगिनीभिश्च सह कथं भवामः? तरुगुल्मलताकीटपतङ्गप्रभृतिप्राणिभिस्सह कथं वर्तामहे? एतत्सर्वमत्यन्तं सारल्येन मृदुवचनेन चोद्‌बोधयति। भारतीयानां जीवने प्रतिपदं संस्कृतस्य महानुपकारः। इयं विद्या कल्पलतेवास्माकं जीवने सर्वमभीष्टं संसाधयति। वसुधैव कटुम्बकम्, संगच्छध्वं संवदध्वम्, सर्वे भवन्तु सुखिनः, मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे, लोकाः समस्ताः सुखिनो भवन्तु इत्यादिवचनपुञ्जैर्विज्ञापितायाः विश्ववन्धुत्वभावनायाः चिन्तनमेतस्याः सर्वातिशयत्वं द्योतयति।

अतः सर्वेरपि मानवैः आत्मगौरवाय, विश्वकल्याणाय, सुखाय, शान्त्यै, समृद्ध्यै च संस्कृतं सततं पठनीयं, चिन्तनीयं, मननीयम्, आश्रयणीयञ्च।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य त्रैमासिकी शोधपत्रिका ''शोधप्रभा''। इयं विगतेभ्यः द्विचत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तनप्रकर्षप्रकाशनाय अनुद्घाटितज्ञानवैभवस्योद्घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः अष्टादशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसंन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसंन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्त्विति कामयानोऽहं निकषधिषणापूरित-विषयवस्तुजातस्य प्रकाममुद्‌बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**प्रो. शिवशङ्करमिश्रः**
**शोधविभागाध्यक्षः**



## विषयानुक्रमणिका

### संस्कृतविभागः

## हिन्दी विभाग

UGC - CARE Listed
जनवरी–मार्च, 2020


# महाभारतान्तर्गतवेदान्ततत्त्वपरामर्शः

डॉ. रा. सुब्रह्मण्यभिडे*

'भारतं पञ्चमो वेदः' इति ख्यातः महाभारतं नामाऽयं ग्रन्थः संस्कृतवाङ्मये सकलविश्ववाङ्मये च बृहत्तमः, शतसहस्रश्लोकात्मकः व्यासरचितः सकलश्रुतिस्मृतीतिहास-पुराणसारः सकलजनसुलभः यदिहास्ति तदन्यत्र न कुत्रचित् इत्यादि प्रशंसावाक्यान्वितः भारतीयसनातनसंस्कृतेः आधारभूतश्च सन् बोभवीतीति सर्वैः सुविदितमेव।

एतादृशे महत्वयुते महाभारते चतुर्विधपुरुषार्था अपि नैकैः आख्यानैः संवादैश्च बहुत्र वर्णिताः चर्चिताश्च। तेषु पुरुषार्थेषु मोख्याख्ये परमपुरुषार्थविषये वेदान्तेषु उच्यमाना अंशाः महाभारते कथमुच्यन्त इति उपलक्षणरूपेण केचन अंशाः अस्मिन् शोधलेखे प्रस्तूयन्ते।

1. महाभारते मोक्षधर्मपर्वणि ब्रह्मतत्त्वविचारसम्बद्धान् बहूनंशान् लभामहे। तत्र ब्रह्मसूत्रेषु आदौ अथातो, ब्रह्मजिज्ञासा[1] इति ब्रह्म जिज्ञास्यामित्युक्त्वा, तस्य किं लक्षणं तद्ब्रह्म इति विचारे जन्माद्यस्य यतः[2] इति सूत्रे लक्षितम्। नाम यतः यस्मात् अस्य जगतः जन्मस्थितिप्रलयाः सम्भवन्ति तदेव ब्रह्म इति। तत्र भाष्यकारैः श्रुतिवाक्यमपि प्रमाणत्वेन दत्तम्। यथा – यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्तभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म।[3] इति। सोंऽशः अत्र महाभारते एवमुच्यते –

**अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनम्।**
**यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः।**
**यच्च शंयन्ति शास्त्रेषु वदन्ति परमर्षयः।। इति।[4]**

2. तथा वेदान्तेषु नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[5] य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति–अथ योऽन्यां देवतामुपास्ते

---

*व्याख्याता, श्रीवेङ्कटेश्वरविश्वविद्यालयः तिरुपतिः।

1. ब्र.सू.1.1.1
2. ब्र.सू.1.1.2
3. तै.उ.3.1
4. मो.ध.301.101,103
5. क.उ.2.1.11

अन्योऽसावन्योऽहमस्मीति न स वेद[1] द्वितीयाद्वै भयं भवति[2] न तु तद्द्वितीयमस्ति[3] यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति।[4] इति समस्तमिदं द्वैतं विश्वम् असदिति यदुच्यते, सोऽयमंशः इत्थं निरूप्यते महाभारते –

**अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतम्।**
**चित्रभित्तिप्रतीकाशं नलसारमनर्थकम्।।**
**तमः श्वभ्रनिभं दृष्टा वर्षबुद्बु दसंनिभम।**
**नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्।।**
**....छित्त्वाऽऽशु ज्ञानमात्रेण तपोदण्डेन भारत।**
**....तरन्ति यतयः सिद्धा ज्ञानयानेन भारत।।** इति[5]

इन्दो मायाभिः पुरुरूप ईयते[6] इति श्रुतिवाक्यरीत्या परमेश्वरस्य बह्वीभिर्मायाभिः असवृतम्, अपां फेनोपमं, भित्तौ चित्रवत् स्थितं, सारहीनम्, अन्धकारे गर्तवत् स्थितं, वर्षजलबुदबुदवत् स्थितं, नाशप्रायं, सुखहीनं, नाशात्परं भावरहितम् इमं लोकं (संसारं वा) सिद्धाः यतयः तपोदण्डेन ज्ञानशस्त्रेण ज्ञानयानेन तरन्तीति भावः।

3. एवञ्च क्षीणे पुण्ये मर्त्यलोकं विशन्ति[7] इति गीतोक्तरीत्या कर्मिणः चन्द्रलोके स्वेषां पुण्यफलभोगानन्तरं यथा इमं लोकमावर्तन्ते ज्ञानिनोऽपि इमं लोकमावर्तेरन् इति शङ्कायां, तेषां न पुनरावृत्तिः[8] एतेन प्रतिपद्यमानानां इमं मानवमावर्त नावर्तन्ते[9], न च पुनरावर्तते[10] इत्यादि श्रुतिवाक्यप्रमाणेन, ब्रह्मसूत्रेषु अन्तिमे अनावृत्तिः शब्दादनावृत्ति शब्दात्[11] इति सूत्रे ज्ञानिनां पुनरावर्तिर्नास्तरति सिद्धनिततम्। स एषोंऽश महाभारते एवं कथ्यते –

**विमुक्तः पुण्यपोभ्यः प्रविष्टस्तमनामयम्।**
**परमात्मानमगुणं न निवर्तति भारत।।इति।।**[12]

सम्यगदर्शनेन विध्वस्ततमाः ज्ञानी पुण्यपापरहितः सन् निर्गुणं निर्विकारं तत् दुःखशोकादिरहितं परमात्मपदं प्रविष्टः इमं संसारं पुनर्न निवर्तन इति भावः।

4. एवं ब्रह्मसूत्रेषु प्रतिषेधाधिकरणे ब्रह्मज्ञानिनः (प्राणानां) गत्युत्क्रान्तयः न सन्तीति प्रतिषेधादिति चेन्न शारीरात्[13] इत्यादिभिः सूत्रैः सिद्धान्तितम्। सोऽयमंशः महाभारते एवं स्मर्यते–

**सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः।**
**देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः।।** इति।[14]

अत्र सर्वभूतात्मभूतस्य ज्ञानिनः गमनकाले अपदस्य तस्य मार्गे पदैषिणः सन्तः

---

1. बृ.उ.1.4.10
2. बृ.उ.4.3.23
3. बृ.उ.4.3.23
4. तै.उ.2.7
5. मो.ध.301.59,60,62,72
6. बृ.उ.2.5.11
7. भ.गी.9.21
8. बृ.उ.6.25
9. छा.उ.4.15.6
10. छां.उ.8.15.1
11. ब्र.सू.4.4.22
12. मो.ध.301,97
13. ब्र.सू.4.2.12
14. मो.ध.262.32

देवा अपि मुह्यन्तीत्युक्तत्वात् ज्ञानिनः गत्युत्क्रान्ती न स्तः इत्यंश प्रतिपादितः। अत्र कश्चन आक्षेपः-अस्मिन्नेव महाभारते शुकः किल वैयासिकिः मुमुक्षुरादित्यमण्डलमभिप्रतस्थे। पित्रा चागम्य आहूतो भोः इति प्रतिशुश्राव।[1] उक्तश्लोकानां भावरूपं वाक्यमिदम्) इति गतिरपि उक्ता खलु इति।

अत्राऽयं परिहारः- अयम् उत्क्रान्तेः पूर्व सशरीरस्यैव योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्गः इति द्रष्टव्यम्, सर्वभूतदृश्यत्वाद्युपन्यासात्। न हि अशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः। तथा च तत्रैव शुकः वायोरपि शीघ्रगतिं प्राप्य अन्तरिक्षगः सन् ब्रह्मभूतो जात इति उत्क्रान्तिरहितत्वेन एवमुपसंहृतम्-

**शुकस्तु मारुताच्छीघ्रं गतिं कृत्वाऽन्तरिक्षगाम्।**
**दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा।।** इति।[2]

5. एवं ब्रह्मसूत्रेषु अंशो नानाव्यपदेशादन्यथा चापि दाशिकितवादित्वमधीयत एके[3] इत्यत्र जीवः परमसत्मनः अंशः इति नाना प्रमाणवाक्यैः विचार्य सिद्धान्तिम्। अत्र जीवब्रह्मणोः ऐक्यत्वात् जैवेन दुःखेन परमात्मनोऽपि दुःखप्रसक्तिरिति सन्देहे एवं परिहारः - अविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्ये अंशे दुःखायमानेऽपि तद्वान् ईश्वरो न दुःखायते। उदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पायमानेऽपि तद्वान् सूर्यः यथा न कम्पते तद्वदिति मन्तव्यम्। एवञ्चास्मिन् पूर्वोक्ते जैवेन दुःखेन परमात्मनो नास्ति दुःखित्वप्रसङ्गः इत्यत्र महाभारते एवं निरूप्यते -

**तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।**
**....न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा।।**
**कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते।**
**स सप्तदशकेनापि राशिना युज्यते पुनः।।**[4]

अत्र उपरिवाक्येषु जीवब्रह्मणोः भेदो दृश्यत इति न मन्तव्यम्। अविद्यया भेददृष्टिं प्राप्तानां मतमनूद्य उपदेशार्थमेवमुच्यते परमात्मा, कर्मात्मा इति। वस्तुतः जीवस्यापि दुःखं नास्ति। यद्यस्तीत्यालोच्यते तर्हि अविद्यानिमित्तैव दुःखप्राप्तिः जीवस्य इति मन्तव्यम्। तथा च अविद्यानिमित्तजीवभावव्युदासेन जीवस्य ब्रह्मभावमेव प्रतिपादयन्ति वेदान्ताः तत्त्वमसि[5] इत्येवमादयः। एवञ्च पूर्वस्मिन् श्लोके पञ्चज्ञानेन्द्रिय-पञ्चप्राण-मनोबुद्धिसहितः सप्तदशकलिङ्गः अविद्याप्रत्युपस्थापितबुद्ध्याद्युपहितो जीव एव परमार्थतः असता मोक्षेण बन्धेन वा युज्यते न परमात्मेति भावः।

6. तथा उपनिषत्सु अणीयान् ह्यतर्क्यमणुप्रमाणात्[6] नैषा तर्केण मतिरापनेया[7] इत्याद्युक्तरीत्या तर्केण परमात्मतत्त्वं ज्ञातुं न शक्यत इत्यत्र ब्रह्मसूत्रेषु तर्काप्रतिष्ठानादप्यथाऽनुमेयमिति

---

1. मो.ध.333.23,24
2. मो.ध.333.19,20
3. ब्र.सू.2.3.43
4. मो.ध.351.14.15
5. छा.उ.6.8.7
6. क.उ.1.2.8
7. क.उ.1.2.9

चेदेवमप्यविमोक्षप्रसङ्गः[1] इति, तथा श्रुतेस्तु शब्दमूलत्वात्[2] इत्यत्र सूत्रेषु च विचार्य। तदेतस्मिन्नंशे महाभारते इमानि वाक्यानि पश्यामः–

**तत्र तत्र हि दृश्यन्ते धातवः पञ्चभौतिकाः।**
**तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते।।**
**अचिन्त्याः खलु ये भाव न तांस्तर्केण साधयेत्।**
**प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्।।** इति।[3]

7. महाभारते जीवस्य मरणादिविचारः यद्यपि अयमंशः आपाततः वेदान्ततत्त्वेषु नान्तर्भूतः इति भासते तथापि वेदान्ततत्त्वविचारात् बहिर्भूय न वर्तत इति मत्वा अस्मिन् विषये महाभारते किमुच्यत इति अत्र किञ्चितद्विचार्यते – सनातनवैदिकसम्प्रदायेतरैः प्रकल्पिते देहत्यागानन्तरं जीवो म्रियत इति विचारे यद्यपि गीतादिषु न जायते म्रियते वा कदाचित्, वासांसि जीर्णानि यथा विहाय[4] इत्यादिवाक्येषु सत्स्वपि, तानि वाक्यानि आत्मपराणि, न जीवपराणि इति मन्यमानानां मूढानां महाभारते वनपर्वणि ब्राह्मणव्याधसंवादे न जीवो म्रियत इति सुस्पष्टमुच्यते–

**न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुम्रियतीति मूढाः।**
**जीवस्तु देहान्तरितः प्रयाति दशार्धतैवास्य शरीरभेदः।।**[5]

जीवनाशः कदापि न सम्भवति, जीवः देहात् पृथगभवत् इतिमात्रेण मूढाः म्रियत इत्याहुः। वस्तुत जीवः देहान्तरं गच्छति। देहभेद एव अस्य मरणमिति व्यववहारो लोके दृश्यत इति भावः।

8. एवञ्च, लोके पुण्यपापफलविचारे श्रद्धधानाः बहवः चिन्तयन्ति वदन्ति च यत् पूर्वजैः आचरितपापस्य फलम् अस्माभिः भुज्यते, एभिर्भुज्यत इत्येवंरूपेण। किन्तु तथ्यमिदस्ति स्वकृतकर्मफलं स्वयमेव भुङ्क्ते, अन्यकृतकर्मफलम् अन्यो न भुङ्क्ते इति महाभारतिडिण्डिमः। तथा जीवः स्वकृतपुण्यपापकर्माभिः सुखदुःखानि अनुभोक्तुं तत्तच्छुभाशुभशरीराणि लभते, पुण्यकर्माणः पुण्यशीला जायन्ते, पापकृतः अधमा जायन्ते, पूर्वजन्मनि यादृशं कर्म आचरित तादृश्या वासनया युक्तस्सन् जायते। जन्तुः स्वकृतानां तत्तत्कर्मफलानाम् अनुभोगार्थमपुण्यां योनिमापद्य, आतुरः अपथ्यं भुक्त्वा यथा दुःखी भवति तथा निरन्तरं दुःखमनुभवन्, दुःखान्ते दुःखरहितसमयमेव सुखमिति मत्वा, कर्मणाम् अनिवृतत्तबन्धत्वात् पुनः पुनः बहुदुःखित चक्रवत् संसारे परिक्रामतीति एभिर्वाक्यैः विशद्यते–

**अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित्।**
**यत्तेन किञ्चिद्धि कृतंक हि कर्म तदश्नुते नास्ति कृतस्य नाशः।।**
**सुपुण्यशीला हि भवन्ति पुण्या नराधमाः पापकृतो भवन्ति।**
**नरोऽनुयातस्त्विह कर्मभिः स्वैस्ततः समुत्पद्यति भावितस्तैः।।**

---

1. ब्र.सू.2.11
2. ब्र.सू.2.1.27
3. भीष्म.5.11,12
4. भ.गी.2.20,22
5. वन, 209.26

**जन्तुस्तु कमभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः।**
**तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते।।**
**ततः कर्म समादत्ते पुनरन्यन्नवं बहु।**
**पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः।।**
**अजस्रमिव दुःखान्तेऽदुःखितः सुखसंज्ञकः।**
**ततोऽनिवृत्तबन्धत्वात्कर्मणामुभयोरपि।।**
**परिक्रामति संसारे चक्रवद्बहुवेदनः।।** इति।[1]

9. एवञ्च महाभारते ज्ञानादेव मोक्षः, सर्वं विश्वं ब्रह्मैव, मुक्ताः परमात्मान एव भवन्ति, यद्यद्वयं पश्यामः तत्सर्वं परमात्मसृष्टा माया इति बहूनि वेदान्ततत्त्वानि तत्र तत्र उच्यन्ते। यथा ज्ञानान्मोक्षो जायते राजसिंह[2] सर्वं विश्वं ब्रह्म चैतत् समस्तम्[3],

**यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः।**
**स वासुदेवो विज्ञेयः परमात्मा सनातनः।[4],**
**माया ह्येषा मया सुष्टा यन्मां पश्यसि नारद इत्यादिभिः।[5]**

10. तथा च वेदान्तेषु तत्त्वमसि, अहं ब्रह्मास्मि इत्यादिषु वाक्येषु जीवपरतया परमात्मोपदेशः यथा श्रूयते तथा महाभारते विशिष्य अहं कि जीवसंज्ञातो मयि जीवः समाहितः[6] इति अहमेव जीवः इति परमात्मना एव जीवोपदेशः स्मर्यते। यद्यप्यत्र ममैवांशो जीवलोके जीवभूतः सनातनः[7] इति गीतायाम् उक्तञ्चेदपि अंशशब्दात् भेदं मन्यमानानां मुग्धानाम् अहमेव जीवसंज्ञया अस्मीति परमात्मवाक्यं सुस्पष्टं ब्रवीति। एतेन जीवब्रह्मणोः भेदविषये कश्चन सन्देहलेशोऽपि मनसि न निधेय इति जीवपरमात्मपक्षाभ्यामुभाभ्यामपि उक्तं सत्, अचिचाल्यमानो दृढतमो विचारः उपस्थापितो भवति।

11. एवमेतावता वेदान्ततत्त्वविचारे, वेदान्तेषु प्रतिपादिताः केचन अंशा महाभारते कथंन्ति।

**प्रतिपादिता इति सप्रमाणं विमृष्टा अत्र।**
**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहस्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्।।**

इत्युक्तरीत्या महाभारते सर्वेषु पुरुषार्थेषु विस्तरेण उपदिष्टेषु सत्स्वपि, विशिष्य, परमार्थतया एक एव पुरुषार्थो मोक्षः इति विस्तरेण निरूपितः सन् महत्त्वात् भारतत्वाच्च महाभारतमुच्यते इति सार्थकनामाऽयं महाभारतग्रन्थः सकलजगतां दुःखनिवारकः सन् नितरामुपकरोति।

---

1. वन.209.27,28,35-37
2. मो.ध.318.87
3. मो.ध.318.89
4. मो.ध.339.25
5. मो.ध.339.45
6. मो.ध.339.47
7. भ.गी.15.7

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# छान्दोग्योपषदि ब्रह्मस्वरूपम्

डॉ. संयोगिता*

शङ्कराचार्यमतानुसारं 'ब्रह्म' शब्दस्य व्युपत्ति 'बृह्' धातोः अभवत्। तेन अयं ब्रह्म शब्दः नित्य-शुद्ध-मुक्तादिभिः अर्थैः स्वीकृतः[1] शब्दकल्पद्रुमानुसारं ब्रह्मशब्दस्य निर्वचनम् एवम्-

**ब्रह्म बृंहति वर्धते निरतिशयमहत्त्वलक्षणबृहिमान् भवतीत्यर्थः।**
**बृहिवृद्धौ बृंहर्नोऽच्च, मनिन् नकारस्याकारः रत्वञ्च॥[2]**

महर्षिदयानन्दसरस्वत्यनुसारं यत् सम्पूर्ण जगत् रचयित्वा वर्धयति अतः परमेश्वरस्य नाम 'ब्रह्म' इति वर्तते। अन्यच्च श्रेष्ठत्वादपि अयं ब्रह्मशब्देन अभिधीयते।[3] ब्रह्म शब्दः उपनिषत्प्रतिपाद्यपरमसत्तायाः द्योतको वर्तते। छान्दोग्योपनिषदनुसारं ब्रह्मणः स्वरूपं उक्तं अस्ति।

**उद्गीथ ब्रह्म-**

**'ओमित्येदक्षरमुद्गीथमुपासीत, ओमिति ह्युद्गायति'**

इदं अविनाशी अक्षरस्वरूपं उद्गीथ शब्दं उपासयेत। स एव ओङ्कार उच्च स्वरेण परिगीयते।[4] वाण्येव ऋचा वर्तते, प्राणः सामो वर्तते। अयम् ओमरक्षकईश्वरः एव अविनाशी उद्गीथो वर्तते।[5] यः इदं अक्षरं उद्गीथं एवं परिजानन् उपासते स निश्चितम् एवं आकांक्षां सम्पूरयति[6]। 'उद्गीथ' उपासनारूपेण व्यवह्यते। इदं सर्वेषु रसेषु रसतमोत्कृष्टपरमात्मनः प्रतीकं, पृथिव्यादि रसेषु च अष्टमं मन्यते।[7] देवैः नासिका-वाणी-चक्षु-श्रोत्र-मन-प्राणरूपस्य उद्गीस्थ उपासना विहीतः असुराश्च पराजितः।

---

*पी.डी.एफ. संस्कृत एवं प्राकृतभाषाविभागः लखनऊ विश्वविद्यालयः लखनऊ

1. ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते बृहतेर्धातोरर्थानुगमात्। – ब्रह्मसूत्रम् 1/1/1 शांकरभाष्यम्
2. शब्दकल्पद्रुमः, पृ. 442
3. योऽखिलं जगन्निर्माणेन बृंहति वर्द्धयति स ब्रह्म, सर्वेभ्यो बृहत्त्वाद् ब्रह्म। – सत्यार्थप्रकाशः, प्रथमोल्लासः
4. छान्दोग्य उपनिषद् 1/1/1
5. वागेवर्क प्राणः साम ओमित्येतदक्षरमुद्गीथः। –छां०उप० 1/1/5
6. आपयिता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपासते। –छां०उपं० 1/1/7
7. सा एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः। –छां०उप० 1/1/3

तत्र असुरैः तस्याम् उपासनायां व्याघातो विहितः किन्तु यदा ते प्राणरूपम् उद्गीथम् औपासनत तदा मृत्खण्डस्य दुर्भेद्य पाषाणे संघट्टनम् इव ते विनष्टः।[1]

**ओ३म् ब्रह्म** – 'ओम् ब्रह्म' अविनाशी विद्यते।[2] यत् किमपि ज्ञायते तद् ओम् अति प्रोच्य स्वीक्रियते[3] ओम् इत्युक्त्वा श्रृणोति ओम इति उच्चार्य प्रशंसते, ओम् इति व प्रोच्य उच्चैः स्वेरण गीयते।[4] निश्यचेन यदा ऋचं लभते तदा ओम् इत्यस्य एव सादरं उच्चारणं विदधाति।[5] यदा उपासकः साधनाक्षेत्रे सफलतां अर्हति तदा सः ओम् इत्यमम् एवं उच्चार्य विचरति, ओम् इत्येव उच्चार्य सर्वत्र भ्रमति।[6] ओम् इत्यस्य अर्थः रक्षको भवति। यदाऽयं जीवात्मा अस्मात् शरीरात् निस्सरति, यदाऽयं एभिः रश्मिभिः (ये सूर्यादा. रभ्य शरीरस्य नाडी यावत् विस्तृताः) ऊर्ध्व गच्छति तदानीं स मरणासन्नो मनुष्यः ओम् इत्येवम् उच्चरति ऊर्ध्वं च गच्छति (मृत्युं लभते)[7] हे मानुष! त्वम् ओम इति स्मर।[8]

**ओङ्कारब्रह्म**– प्रजापतिना तानि त्रीण्येव अक्षराणि (भूर्भुवः, स्वः) तपयितानि, तेषां तपेन ओङ्कार प्रकाशितः यथा पत्राणां नाले इत्यनेन सर्वाण्यपि पत्राणि व्याप्तानि सन्ति तथैव ओङ्कारेण सर्वाः वेदावाण्यः च व्याप्ताः। इदं सर्वम् ओङ्कार एव विद्यते। अयं सम्पूर्ण संसारः ओङ्कार इत्यनेन परिव्याप्तः।[9]

**प्रणवब्रह्म – 'तस्य वाचकः प्रणवः'**[10]

तस्य ब्रह्मणो वाचकः विद्यते। यः उद्गीथ स प्रणवः विद्यते, यश्च प्रणवः स उद्गीथः। निश्चयेनैव अयं सूर्यः उद्गीथः अतः अयं प्रणवः, यतोहि अयम् ओमकारं उच्चार्य ब्रजति।[11]

**आत्मब्रह्म**– आत्मशब्दस्य प्रयोगः ब्रह्माण्डे सारभूतं तत्त्वे तथा मनुष्ये विद्यमानश्वासरूपेण लभ्यते।[12] उपनिषत्सु प्रोक्तः प्रथम अर्थः ब्रह्मपदेन साकं आत्मा मानवस्य सारतत्त्वरूपेण प्रोच्य द्वयोः तादात्म्यं स्थापनं कृतम् अस्ति।[13] प्रजापतिः इन्द्राय आत्मोपदेश प्रददत एवम्

1. छां०उप० 1/2/1-7
2. ओमित्यतदक्षरमुद्गीथः। छां०उप० 1/1/5
3. यद्धि किञ्चानुजानाति 'ओमित्येव' तदाह। छां०उप० 1/1/8
4. ओमित्याश्रावयति ओमिति शँसति ओमित्युद्गायति। छां०उप० 1/1/9
5. यदा वा ऋचमाप्नोति 'आमित्येतिस्वरति। छां०उप० 1/1/4
6. ओमिति ह्येष स्वरन्नेति। छां०उप० 1/5/1
7. अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैवतैरेव रश्मिभिरुर्ध्व आ (मा) क्रमते। स ओमिति वाहोद्वा मीयते।। –छां०उप० 8/6/पृ. 900, 901
8. ओ३म् क्रतो स्मर। यजुर्वेदः 40/15
9. तानभ्यपतत् तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत। तत् यथा शङ्कुना पर्णानि सन्तृष्णानि, एवमोङ्कारेण सर्वा वाक् सन्तृष्णा ओङ्कार एवेदं सर्वम्।। छा. उ. 2/23/3
10. योगदर्शनम् 1/27
11. अथ खलु य उद्गीथः स प्रणवः, यः प्रणव स उद्गीथ इति असौ वा आदित्य उद्गीथ, एप प्रणवः, ओमिति ह्येष स्वरन्नेति।। छां०उप० 1/5/1
12. ए हिस्ट्री ऑफ इण्डियन फिलासफी खण्ड-1, पृ. 45
13. उपनिषत्कालीन समाज एवं संस्कृति, डॉ. राजेन्द्र त्रिवेदी, पष्ठ अध्याय

अवोचत्- 'यः आत्मा (परमात्मा) पापरहितः, जरारहितः, मृत्युरहीतः, जन्मरहितः, क्षुधारहितः, पिपासारहितः, सत्यवादी सत्यसङ्कल्पैश्च युक्तः, सः अन्वेषणीयः तथा विशेषणीय ज्ञातव्यः। यः तम् आत्मानं (परमात्मा) अन्विष्य परिजानाति, स सम्पूर्ण लोकान् आकाक्षांश्च प्राप्तुम् अर्हति।[1]

**भूमाब्रह्म** - सनत्कुमारः नारदं कथयति- "वस्तुतः या भूमा तदैव सुखं क्षुद्र वस्तुनि सुखं न विद्यते, भूमैव सुखम्। त्वया भूमा (ब्रह्मणे) एव जिज्ञासा कर्त्तव्या।[2] वस्तुतः या भूमा तदैव अमृतं विद्यते। इयमेव भूमा (ब्रह्म) अधः, ऊर्ध्वं, पूर्वस्यां, पश्चिमायां दक्षिणायां उत्तरस्यांश्चैव, त्वं तां माम् उपासयस्व"।

**अहं ब्रह्म** - 'अहम्' इति सर्वनामवाचकः उत्तमपुरुषः वर्तते। हे मनुष्याः! अहं सनातन परमेश्वरस्य सम्पूर्णजगतः स्वामी अस्मि। अहम् अन्येषां सनातनजीवात्मानां प्रकृतेश्च सर्वेषां धनानां च समावेशं करोमि। सर्वे जीवाः मां पितृकल्पाः सन्तः आह्वयन्ति, अहं दानी मानवाय (आत्मसमर्पणकृते) उत्तमोत्तमभोग्यसामग्रीं यच्छामि।[3] छान्दोग्योपनिषदः इयम् उद्घोषणा अभिधेया- 'अहं' (ब्रह्म) एव अधः, अहमेव ऊपरि, अहमेव पश्चिमायां, अहमेव च उत्तरस्यां विराजे। इदं सर्वं अपि मयि परियाप्तम् अस्ति।[4]

**सर्वब्रह्म** - छान्दोग्योपनिषदः इदं महावाक्यं प्रसङ्गेऽस्मिन् ध्यातव्यं अस्ति।

**'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'।[5]**

निश्चयेन इदं ब्रह्म सर्वम् अस्ति। तस्माद् एव ब्रह्मणः जगदिदं उत्पद्यते, विलीयते च तथा तेनेव ब्रह्मणः जगदिदं फलितं-पोषितं भवति।

**वाग्ब्रह्म** - 'वाण्येव ब्रह्म', शब्दोऽयम् अनादिरनन्तश्च वर्तते। अनेनैव शब्देन जगत-व्यवहारस्य सम्पूर्णा प्रक्रिया प्रचलति। इदम् अक्षरस्वरूपं विद्यते।[6] सनत्कुमारः नारदं वद. ति-'यो वाणीं ब्रह्म इति विज्ञाय उपासते स वाण्याः सर्वाम् अपि गतिं लब्धुम् अर्हति। ऋक्यजुःसामाथर्ववेदानां तथा अन्येषां सर्वेषां लौकिकवस्तूनां प्राप्तिः वाण्येव जायते, वागेव परमं ब्रह्म तथा सः देवो भूत्वा अन्यान् देवान् प्राप्तुम् अर्हति।[7]

---

1. य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। स सर्वाश्च लोकानाप्नोति सार्वश्च कामान् यस्तमात्मान् मनुविद्य विजानातीति ह प्रज. पतिरुवाच।। - छां०उप० 8/7/पृ. 903, 906
2. यो वै भूमा तत् सुखम्। नाल्पे सुखमस्ति। भूमैव सुखम्। भूमा त्वेव विजिज्ञासितव्य इति- छां०उप० 7/23/1
3. अहं भुवं वसुनः पू र्व्यस्पतिरहं धनानि सं जयामि शाश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भाजामि भोजनम्।। - ऋग्वेद: 10/48/1
4. अथातोऽहङ्कारादेश एव - अहमेवाधस्तात् अहमुपरिष्टात्, अहं पश्चात्, अहं पुरस्तात् अहं दक्षिणतः, अहमुत्तरतः, अहमेवेदं सर्वमिति।। छां०उप० 7/25/1
5. छान्दोग्योपनिषद् 3/14/1
6. अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः। -वाक्यपदीयम् 1/1
7. अब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मोति। यथा मातृमान् पितृनामाचार्यवान् ब्रूयात्तथा तच्छैलिकनरब्रवीद्वाग्वै ब्रह्मेत्यवदतो.... वाग्वै सम्राट परमं ब्रह्म।। बृह०उप० 4/1/2

**प्राण ब्रह्म** – सर्वप्रथम अथर्ववेदे प्राणसूक्तरूपेण अस्य महत्त्वं ज्ञायते।[1] कालान्तरे अयमेव तत्त्वमीमांसाया: प्रमुख: विवेच्यविषय: बभूव। सर्वम् एव प्राणे वशीभूत:। इदं ब्रह्म विराट निर्दिष्टा तथा सर्वै: उपास्य चन्द्रसूर्यप्रजापतिरूपेण स्वीकृतं वर्तते।[2] इदं जीवनदायिनीशक्तरूपेणापि प्रसिद्धम् अस्ति।[3]

**पुरुष ब्रह्म** – यं वयं पश्याम: वस्तुत: स आत्मा एव। इदम् अमृतम्, इदम् अभयम्, इदं च ब्रह्मैव।[4] अयं पुरुष: सहस्रशीर्षा:, सहस्राक्ष:, सहस्रपादा:, अयं सभूमिं परित: परिव्याप्य सम्पूर्णब्रह्माण्डे व्यापक:, पुरुषस्य एकपाद अयं संसार: त्रयश्च पादा: मोक्ष: विद्यन्ते।[5]

**सगुणब्रह्म** – जगत: साकं यद् ब्रह्म वर्ण्यते तदैव संगुण ब्रह्म प्रोच्यते। इदमेव सप्रपञ्चम्, इत्येनापि शब्देन अभिधीयते।[6] सम्पूर्ण जगत् अस्मादेव ब्रह्मण: समुत्पद्यते अस्मादेव फलितं-पोषितं च भवति तथा तस्मिन् एव विलीयते[7] इदं मनोमय प्राणं, शरीरं, सत्यसङ्कल्पं, आकाशं, शरीरं, सर्वकमाणि, सर्वरसं, शरीरव्यापकं, वाक्रहितं सम्भ्रमशून्यं च वर्तते।[8]

**सद् ब्रह्म** – सृष्टे: पूर्वम् एकमेव अद्वितीयं सत् (ब्रह्म) आसीत्।[9] यथा एकमृत्पिडस्य ज्ञानेनैव सर्वेऽपि मृत्पिण्डपदार्था: परिज्ञायन्ते, यत: विकार: (घटादि) वाणीं विस्तरति तदैव नाममात्रं विद्यते। तत्र केवलं मृत्तिकैव सद् विद्यते।[10]

**वैश्वानरब्रह्म** – तस्य वैश्वानरब्रह्मण: सुतेजा (द्युलोक:) मूर्धा विद्यते। विश्वरूपक: (सूर्य) एव मन्ये नेत्रं विद्यते, पृथग् वर्त्मातमा मन्ये प्राण: स्यात्, बहुल (आकाशं) मन्ये मध्यशरीरं स्यात्, मन्ये जलमेव ग्राम स्यात्। मन्ये वक्षस्थलं स्यात्। कुशा एव मन्ये लोमा: गार्हपत्यम् एव मन्ये हृदयं स्यात्। अन्वाहार्य पचनम् एव मन्ये मन: स्यात्। आहवनीयम् एव मन्ये आस्यं (मुख) स्यात्।[11] य: तम् आत्मानं वैश्वानरम् एवं प्रादेशमात्रा

---

1. प्राणाय नमो यस्य सर्वमिदं वशे। यो भूत: सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम्।। -अथर्ववेद: 11/4/1
2. प्राणो विराट् प्राणे देष्ट्री प्राणं सर्व उपासते। प्राणो ह सूर्यश्चन्द्रमा: प्राणमाहु: प्रजापतिम्।। – अथ० 11/4/12
3. अपां गर्भमिव जीवसे बध्नामि त्वा मयि। -अथर्ववेद 11/4/26
4. य एषोऽक्षिणी पुरुषो दृश्यते, एष आत्मेति होवाच, एतद् मृतमभयम्, एतत् ब्रह्मेति।। -छां०उप०4/15/1
5. (क) सहस्रशीर्षा पुरुष: सहस्राक्ष: सहस्रपात्। स भूमि सर्वत: स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्।।
   – यजुर्वेद: 31/1, ऋग्वेद: 10/90/1
   (ख) एतावानस्य महिमातो ज्यायांश्च पूरुष:। पदोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।।
   – यजुर्वेद 31/3, ऋग्वेद 10/90/3
6. उपनिषद् कालीन समाज एवं संस्कृति डा० राजेन्द्र त्रिवेदी, षष्ठ अध्याय दर्शन
7. छान्दोग्योपनिषद् 3/14/1
8. छान्दोग्योपनिषद् 3/14/2
9. सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तद्वैक आहु: आसीदेवमग्र आसीदेकमेवाद्वितीयम्। तस्मादसतस्सज्जायत। आसीदेकमेवाद्वितीयम् ।। छां०उपं० 6/8/7
10. यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्., वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।। छां० उप० 5/18/1
11. तस्य ह वा एतस्यात्मनौ वैश्वानरस्य – मूर्धैव सुतेजा:, चक्षुर्विश्वरूप:, प्राण: पृथग्वर्त्मा, संदेहो बहुलो वस्तिरेव रयि: पृथ्व्येव पादौ। उर एव वेदिर्लोमानि बर्हि: हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहचनीय:।। छां० उप० 5/18/2

(विराटरूपेण) अभिविमानम् इति विज्ञाय तम् उपासते स एव सर्वेष्वपि लोकेषु, सर्वेष्वपि प्राणेषु, सर्वेष्वपि आत्मसु च सानन्दं तिष्ठति।[1]

**तत्त्वब्रह्म** – उपनिषदः महावाक्यम् अस्ति– 'तत्त्वमसि'[2]। अस्य सम्पूर्ण जगतः तदैव परमात्मा (ब्रह्म) जीवनम् अस्ति। तदैव ब्रह्म सत्यमस्ति, तदैव पवरमात्मतत्त्वं (परमार्थवस्तु) अस्ति।

**ज्योतिब्रह्म** – जगतः नित्यकारणम्, अनादिब्रह्म च दिनम् इव सर्वत्र व्याप्तं प्रकाशं योगिनः पश्यन्ति, यः प्रकाशः ब्रह्मणि प्रदीप्यमानो भवति। ब्रह्मणः प्रकाशः सर्वत्र सुखं च संदृश्य वयम् अज्ञानरूपतिमिरं समतिक्रम्य देदीप्यमानं, सर्वप्रेरकोत्तमं प्रकाश (ब्रह्म) सम्प्राप्ताः।[3]

**आकाश ब्रह्म** – निश्चितम् एव आकाशं (ब्रह्म) जगतः संज्ञा रूपस्य च प्रकाशो विद्यते। ताः संज्ञा रूपाणि च यन्मध्ये विद्यन्ते तदैव ब्रह्म इत्युच्यते तदैव अमृतं (मोक्षस्वरूपं) अस्ति, सैव आत्मा (परमात्मा) सर्वेष्वपि परिव्याप्तः। एतादृशस्य प्रजानाथपरमेश्वरस्य व्याप्तिरूपं शरणम् अहं प्राप्नुयाम्। हे भगवान्! अहं भवत्कृपया श्वेत (रक्त) दन्तरहितः तथापि यश–बल–वीर्य–धर्मनाशकः सन् अहं जन्मयोनिं लभेम्।[4]

---

1. यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्म स्वन्नमत्ति।। छां० उप० 5/18/1
2. एतदात्म्यमिदं सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसिश्वेताकेतो।। –छां० उप० 6/8/7
3. आदित् प्रत्नस्य रेतसः – उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् स्वः पश्यन्त उत्तरम्। देवं देवत्र सूर्यगमन्म ज्योतिरुत्तमम्।। इति ज्योतिरुत्तममिति।। --छां० उप० 3/17/7, पृ. 516, 518
4. आकाशो वै नाम नामरूपयोनिर्वहिता, ते यदन्तरा तत् ब्रह्म तद्मृतं स आत्मा। प्रजापतेः सभां वेशम प्रपद्ये। यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि। स हाई यशसां यशः। श्वेतं (श्ये) तमदत्कमदत्कं श्वेतं लिन्दुमाऽभिगाम् लिन्दु माऽभिगाम्।। – छां० उप० 8/14/1

UGC - CARE Listed **शोधप्रभा**
**जनवरी-मार्च, 2020** वर्ष : 45, प्रथमोऽङ्कः

# नैषधमहाकाव्ये सांख्ययोगतत्त्वविमर्शः

**डॉ. जीवनकुमारभट्टराई***

भारतीयदर्शनं तत्त्वज्ञानस्य मार्गं प्रदर्शयति। भगवता श्रीकृष्णेनोक्तं श्रीमद्भगवद्गीतायाम्-

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥**
**प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्विषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥**[1]

तत्र आस्तिकदर्शनेषु अन्यतमं स्थानं वरीवर्ति सांख्ययोगदर्शनम्। सांख्यदर्शनं वेदमूलकं प्राचीनतमं चास्ति। वैदिकसाहित्ये सांख्यसम्मतास्सिद्धान्ता अनेकत्र समुपवर्णितास्सन्ति। 'अजामेकां लोहित-शुक्लकृष्णम्" इति उपनिषद्वाक्यं सांख्यदर्शनस्य बीजभूतं तत्त्वं वर्तते। सत्त्वादिगुणानां महदादिकारणानां प्रकृतिपुरुषयोश्च वर्णनमपि नैकेषु स्थलेषु समुपलभ्यते। वेदसम्मतं सांख्यदर्शनं पुराणेतिहासादिषु भूयो-भूयः प्रशसितमस्ति। सांख्यदर्शनस्य सृष्टिप्रक्रिया सर्वेषु पुराणेषु प्रायः स्वीकृताऽस्ति। श्रीमद्भगवद्गीतायां सांख्ययोगस्य तत्त्वं विविधप्रसङ्गे दरीदृश्यते। विषयेऽस्मिन् स्वयं महर्षिव्यासो ब्रवीति यत्– "सांख्यं वै मोक्षदर्शनम्" इति। अस्य दर्शनस्य गुणत्रयवादस्तु वैदिकवाङ्मये लौकिकवाङ्मये च सर्वत्र सुप्रसिद्धमेवास्ति। अत एव समग्रेषु भारतीयवाङ्मयेषु अत्यन्तं गौरवास्पदं स्थानं लभते सांख्यदर्शनम्।

**व्युत्पत्त्यात्मकोऽर्थः**–सांख्य-शब्दः सम् उपसर्गपूर्वकं चक्षिङ्ख्या धातोः अङ् प्रत्ययेन निष्पन्नः। अस्यार्थः 'सम्यक् ख्यानम्' इति। यत्र प्रकृति-पुरुषयोः विवेकविचारः, गुणत्रयविचारः, पुरुषस्वरूपविचारः, सृष्टिविचारः, महदहङ्कारादीनां च सम्यक् विवरणं समुपलभ्यते। यथा– 'संख्यावान् पण्डितः कविः' इत्यमरः। कोशवचनानुसारेण संख्यावानेव पण्डितो भवति। अमरकोशसम्मतः 'संख्या' शब्दस्यार्थः चर्चा-विचारणा वा अस्ति। समतीर्थभट्टाचार्यमहोदयः सांख्यशब्दं परिभाषयन् उल्लिखति यत्– ''पञ्चविंशतितत्त्वानां विचारः सांख्यं तमधिकृत्य कृतो ग्रन्थः सांख्यमुच्यते।"

---

प्रूफरीडरः, शोधविभागः श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविश्वविद्यालयः, नवदेहली-16

1. गीता.६/४३-४५

सांख्यदर्शनस्य सर्वाधिको सुप्रसिद्धो प्रमुखसिद्धान्तोऽयं सत्कार्यवादोऽस्ति। सत्कार्यवादस्य अर्थोऽस्ति यत् उत्पत्तिपूर्वे कार्यं स्वकीयकारणे विद्यमानं वर्तते, कार्यं स्वोत्पत्तिपूर्वमपि सद्वर्तते। अस्मादेव कारणादयं सिद्धान्तः सत्कार्यवाद इति नाम्ना सुप्रसिद्धः। सांख्यमते कार्यं काऽपि नूतना सृष्टिः नास्ति। सत्कार्यवादानुसारेण कारणस्य परिवर्तनरूपमेव कार्यमित्युच्यते। अस्य अपरनाम प्रकृतिपरिणामवादोऽपि अस्ति। अस्यानुसारेण प्रकृतिः प्रलयावस्थायां बीजरूपेण अव्यक्तरूपेण वा समस्तसृष्टिम् आत्मविजयं करोति। तथा च सा गविस्थायां कार्यरूपे तान् व्यक्तं करोति। कार्यं किमपि नूतनं न भवति, अपितु कारणस्य कार्यरूपे मात्राभिव्यक्तिः वर्तते। सांख्यकारिकायां सत्कार्यवादस्य सिद्धिः यथा–

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।**[1]

कार्यकारणस्य सिद्धान्तः एव कारणतावाद इत्युच्यते। अयं कारणतावादसिद्धान्तः सांख्यस्य एव न अपितु समस्तभारतीयदर्शनानां मूलभूतसिद्धान्तोऽस्ति। सांख्यस्य अस्मिन्नेव तस्य प्रकृतिवादः आश्रितोऽस्ति। अनेन सिद्धान्तानुसारेण किमपि कार्यम् अकारणेन न भवितुमर्हति। प्रत्युत् प्रत्येकं कार्यस्य किमपि कारणम् तु अवश्यमेव भवति। सांख्यदर्शनानुसारेण कार्यकारणयोः अभिन्नसम्बन्धोऽस्ति। कारणे सति कार्यं तथैव कारणाभावे कार्यस्यापि अभावो वर्तते। अर्थात् कारणे सति कार्यमपि सत् तथैव कारणे असति तु कार्यमपि असत् भविष्यति। येन द्वयोर्मध्ये अविनाभावसम्बन्धो वर्तते।

नैषधीयचरितमहाकाव्यस्य प्रणेता महाकविश्रीहर्षः विविधविषयस्य व्युत्पत्तिवैशिष्ट्येन स्वपाण्डित्यप्रकर्षेण च संस्कृतकाव्यजगति अद्वितीयं स्थानं भजते। कवित्वेन साकं व्युत्पत्तेर्मेलनं विलक्षणत्वं प्रतिभाति। श्रीहर्षः न केवल एकः कविः, अपितु स महान् दार्शनिकः तार्किकश्च आसीत्। कविना श्रीहर्षेण नैषधीयचरितमहाकाव्यं न्यायग्रन्थस्य खण्डनखण्डखाद्यस्य सहोदरत्वेन स्वीकृतम्। तद्यथा–

**षष्ठः ख़ण्डनखण्डतोऽपि सहजात्क्षोदक्षमे तन्महा–**
**काव्योऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्जवलः।।**[2]

नास्त्यत्र काचिद् विप्रत्तिपत्तिः यत् श्रीहर्षस्य नैषधमहाकाव्यं विभिन्नदार्शनिकसिद्धान्तैः मण्डितं वर्तते। सांख्यस्य सत्कार्यवादसिद्धान्तः अस्य वर्णनं नैषधीयचरितमहाकाव्ये कविना स्वबुद्धिकौशलेन विविधप्रसङ्गेषु प्रकाशितमस्ति। तत्र तृतीयसर्गे दौत्यकार्यं कुर्वन् हंसः दमयन्त्या सह कार्यकारणयोः गुणस्य महत्त्वं प्रदर्शयति––

**स्वर्गाऽऽपगाहेममृणालिनीनां नालामृणालाऽग्रभुजो भजामः।**
**अन्नाऽनुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते।।**[3]

---

1. सां.का.९
2. नै. ६/११३
3. नै. ३/१७

पुनः कार्यकारणे जन्यजनकाभेदो भवति, इत्यस्मिन् विषये तत्र पञ्चमसर्गे राजा नलस्य याचकरूपे विद्यमानैः देवैः सह संवादावसरे कविना सांख्यसिद्धान्तः स्पष्टतया स्वीकृतः। तद्यथा-

**नास्ति जन्यजनकव्यतिभेदः सत्यमन्नजनितो जनदेहः।**
**वीक्ष्य वः खलु तनूममृतादं दृङ्निमज्जनमुपैति सुधायाम्॥**[1]

प्रसङ्गेऽस्मिन् अमृतं कारणं तथा इन्द्रादिदेवानां शरीरं तदमृतं भक्षणं कृत्वा उत्पन्नमानं कार्यरूपम् इति अभीप्सा व्यक्तिकृता यथा हि प्रसिद्धटीकाकारेण मल्लिनाथेन तत्रैव प्रकाशितम्- जन्यजनकयोः कार्यकारणयोर्व्यतिभेदो नास्ति, कार्यं स्वोपादानादभिन्नमित्यर्थः। जनदेहः अन्नजनितः मुक्ताहारपरिणामश्चेत्येतदुभयं सत्यमित्यर्थः। कुतः, अमृतमदन्तीत्यमृतादः। तेषाममृतादाममृतभुजां वो युष्माकं, तनूं मूर्तिं वीक्ष्य दृष्टिः सुधायां निमज्जनमुपैति खलु सुधामज्जनसुखमनुभवतीत्यर्थः। जनदेहानामन्नजन्यत्वे तद्वदेव युष्मद्देहानामपि तथात्वे कथमेतत्सुधाकार्यकारित्वं न स्यादित्यर्थः।[2]

कारणे एव कार्यस्य विलयो भवति इति सांख्यदर्शनस्य मतम् अनुसृत्य एकविंशतितमे सर्गे महाराजनलद्वारा परशुरामावतारस्मृतिवर्णने श्रीहर्षो वक्ति-

**क्षत्रजातिरुदियाय भुजाभ्यां या तवैव भुवनं सृजतः प्राक्।**
**जामदग्न्यवपुषस्तव तस्यास्तौ लयार्थमुचितौ विजयेताम्॥**[3]

यथा ऋग्वेदे- 'ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः उरूतदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत'[4] तैत्तरीयसंहितायाः 'स मुखतस्त्रि वृत्तं निरमिमीत्'[5]। महाभारतस्य वाक्यमिदमपि- 'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्। तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति'।[6]

अर्थात् स्व-स्वोत्पत्तिकारणे सर्वेषां शमनो भवति। उपर्युक्तसंगतिः सांख्यस्य 'नाशः कारणालयः' इत्यनेन सिद्धान्तेन जायते। वेदान्तसिद्धान्ते तु जातेर्नित्यत्वाभावः। तस्मिन् विषये टीकाकारो मल्लिनाथः प्रतिपादयति एकविंशतितमे सर्गे-'नाशः कारणालयः' इति सांख्यादिसिद्धान्तात् कार्यं हि कारणे एव लीनं भवतीति सर्वत्र दर्शनाच्च कार्यभूतां क्षत्रजातिं प्रति तव भुजयोरेव कारणात् क्षत्रजातेस्तव भुजयोरेव लीनत्वस्यौचित्यादिति भावः।[7]

तत्रैव नारायणीटीकाकारोऽपि प्रकाशयति यत्- 'तस्याः क्षत्रजातेर्लयार्थं सूत्रार्थं जामदग्न्यवपुस्तव तौ (यौ) भुजौ उचितौ कार्यलयस्यौचित्यात् इति'[8]

---

1.नै. ५/९४
2. नै. ५/९४, मल्लिनाथः
3. नै. २१/६५
4. ऋ. ८/४/१८
5. तै.स. ७/१/१/१४
6. महा.शा.प. ५६/२४
7. नै. २१/६३, मल्लिनाथः
8. नै. २१/६५, नारायणः

सत्त्वरजस्तमस्त्रिगुणात्मिका साम्यावस्था एव प्रकृतिरुच्यते। उक्तं च श्रीमद्भगवद्गीताम्–

**साङ्ख्ययोगो पृथग्वाला: प्रवदन्ति न पण्डिता:।**
**एकमप्यास्थित: सम्यगुभयोर्विन्दते फलम्॥**
**यत्सांख्यै: प्राप्यते स्थानं तद्यौगैरपि गम्यते।**
**एकं सांख्यं च योगं च य: पश्यति स पश्यति॥[1]**

यत्र सांख्यं बौद्धिकतत्त्वस्य आधारो निर्माति तत्रैव योग: तं तत्त्वं प्राप्तये साधना क्रिया वा साधयति। गीतायामपि साख्यं ज्ञानरूपात्मकं योगं च कर्मरूपात्मकं स्वीक्रियते। यथा हि–

**लोकेऽस्मिन् द्विविधा निष्ठा पुराप्रोक्ता मयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥[2]**

योगदर्शनकारमते– 'युज् समाधौ' इत्यर्थ एव योगपदस्य प्रयोगो अभीष्ट:। विविधेषु शास्त्रेषु विभिन्नानर्थान् प्रतिपादयन्ति बुधा: गीतायां तु सांख्ययोगविज्ञानमेव सर्वत्र परिलक्ष्यते।

संस्कृतसाहित्येऽपि योगदर्शनस्य चर्चा बहुत्र क्रियते बुधै:। नैषधीयचरितमहाकाव्ये कविना श्रीहर्षेण योगदर्शनस्य विषये विविधेषु प्रसङ्गेषु चित्रणं प्रदर्शितमस्ति। तत् तत् स्थलेषु नलकृतदेवार्चनाप्रसङ्गे यथा योगदर्शनस्य चर्चा नैषधकारेण विहिता तदवलोक्य एवं प्रतीयते यत् कविना साक्षाद्योगशास्त्रस्य साहाय्येन एष ग्रन्थ: लिखित: इति।

तृतीयसर्गे हंसदमयन्तीसंवादे नैषधकार: योगशास्त्रश्रवणस्य चर्चा करोति। यथा–

**वार्तापि नासत्यपि सान्यमेति योगादरन्ध्रे हृदियां निरुन्धे।**
**विरञ्चिनानाननवादधौतसमाधिशास्त्रश्रुतिपूर्णकर्ण:॥[3]**

पद्येऽस्मिन् हंस: दमयन्तीं प्रति वदति यत् नैकमुखै: प्रतिपादितस्य योगशास्त्रस्य श्रवणेन मम कर्णौ पूर्णौ जातौ अत एव अहम् अर्थात् हंस स्वनिर्दोषहृदये यं वचनं धारयिष्यामि तद्वचनम् अन्यत्र नैव स्खलति।

'अस्मिन् प्रसङ्गे महर्षिपतञ्जले: सूत्रं योगश्चित्तवृत्तिनिरोध:, तदाद्रष्टु: स्वरूपेऽवस्थानम्' इत्यादिकम् अनुसृत्य टीकाकारा: तत्र व्याख्या कुर्वन्ति।

अष्टाङ्गयोगविषयकचित्रणमपि नैषधीयचरितस्य द्वितीये सर्गे परिलक्ष्यते–

**क्षणनीरवया या निशि श्रितवप्रावलियोगपट्टया।**
**मणिवेश्ममयं स्म निर्मलं जोतिरबाह्यमिज्यते॥[4]**

1. गीता ५/४, ५,
2. गीता. ३/३,
3. नै. ३/४४,
4. नै. २/७८

कविनाऽत्र कुण्डिनपुरीवर्णने तस्य नगरस्य स्थितिः किञ्चित्कालं तादृशी प्रतीयते यत् तथा पङ्क्तेः योगवस्त्रधारणं कृत्वा मणिभवनसदृशीं विशुद्धान्तर्ज्योतेः उपासना प्रचलतीति चिन्तितम्। तत्रैव नारायणीटीकाकारः स्वस्य टीकायां प्रकाशयति यत्–अन्यापि योगिन्या क्षणमौनिन्यां आश्रितयोग पट्टया च निर्मलमविद्यादिदोषरहितं किमपि वाङ्मनसयोरविषयम् अबाह्यमाभ्यन्तरमात्मलक्षणं ज्योतिरात्रौ पूज्यते, विषयीक्रियत इत्यर्थः।[1]

महर्षिपतञ्जलिना समाधिः द्विधा प्रतिपादिता तत्र– १. सम्प्रज्ञात समाधिः २. असम्प्रज्ञातसमाधिश्च। 'सम्यक् ज्ञायते साक्षात्क्रियते ध्येयमस्मिन् इति सम्प्रज्ञातः।'

नैषधीयचरिते सम्प्रज्ञातसमाधेः चित्रणं एकविंशतितमे सर्गे राजा नलद्वारा भगवतः विष्णोरुपासनायां द्रष्टुं शक्यते। तद् ११८ तमं पद्यमिदम्–

**इत्युदीर्य स हरिं प्रति सम्प्रज्ञातवासिततमः समपादि।**
**भावनाबलविलोकितविष्णौ प्रतिभक्तिसदृशानि चरिष्णुः॥[2]**

नलेनाऽत्र स्वभावनायां विष्णोः साक्षात्कारं कृत्वा भक्तिरुद्रेकौ प्रेमभक्तियोग्यं नृत्यं, गीतादि आचरितम्। टीकाकारः नारायणोऽत्र वक्ति–'स नलः हरिं प्रति इत्युक्तप्रकारेणोदीर्य प्रसादं संप्रार्थ्य द्विविधसमाधिमध्ये संप्रज्ञाताख्येन समाधिना तत्र वासिततमः अतितरां संभावितमनास्तदेकतानः समपादि जातः।'[3]

**निष्कर्षः** – इत्थं नैषधीयचरितमहाकाव्यस्य सम्यक् परिशीलनेन प्राप्यते अवलोक्यते च यत् महाकविना श्रीहर्षेण विविधवर्णनानां प्रसङ्गे विविधदर्शनेषु विहितसिद्धान्तानां चर्चा विहिता, येन ग्रन्थस्यास्य महत्त्वम् अद्वितीयं सञ्जानातम्। महाकाव्यस्यास्य तत्तत्प्रसङ्गेषु यथा हंसदमयन्तीसंवादे, नल-देवानां संवादे, नलस्य देवार्चनाप्रसङ्गे, नलस्य सन्ध्योपासनावर्णनप्रसङ्गे च सांख्ययोगतत्त्वस्य चित्रणम् उत्तमरीत्या प्रकाशितं महाकविना। नैषधीयमहाकाव्यस्य प्रायशः प्रत्येकसर्गे उपर्युक्तदर्शनतत्त्वानि समुपलभ्यन्ते।

---

1. तत्रैव, नारायणः
2. नै. २१/११८
3. तत्रैव, नारायणः

UGC - CARE Listed शोधप्रभा
जनवरी-मार्च, 2020 वर्ष : 45, प्रथमोऽङ्कः

# 'इत्थंभूतलक्षणे' इति सूत्रप्रवृत्तिविचारः

डॉ. प्रदीपकुमारपाण्डेयः*

अध्यात्मवादमाश्रित्य जायमानानि यावन्त्यपि दर्शनानि सन्ति तावन्ति सर्वाण्यपि पुरुषप्रवृत्तिप्रयोजकप्रयोजनेषु ब्रह्मसाक्षात्काररूपस्य परमपुरुषार्थस्य मोक्षस्याऽवाप्तये द्वारं प्रतिपादयन्ति। तत्र व्याकरणदर्शनदिशा धर्म एवापवर्गसाधनम्, किन्त्वपवर्गद्वार-भूतधर्मस्याऽवाप्तिः मनुष्याणां न दर्शनान्तररीत्या यागादिना भवति, अपितु साधुशब्दप्रयोगादेव। नेयं कल्पना कपोलकल्पिता किन्तु स्वयमेव महाभाष्यकारेण पस्पशायाम्, **शब्दस्य ज्ञाने धर्मः आहोस्वित् प्रयोगे**[1] इति विचारप्रसङ्गे कण्ठरवेणोक्तं यत् **साधुशब्दप्रयोगे धर्मः**[2] अपि च ''एकः शब्दः सम्यक् ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'' इति श्रुत्या, साधुभिर्भाषितव्यं नापशब्दैः'' इति श्रुत्या चसाधुशब्दस्यैवाभ्युदयहेतुत्वं सिद्ध्यति। आचार्य भर्तृहरिरप्यब्रवीत् यत् **शिष्टेभ्यः आगमात् सिद्धाः साधवः धर्मसाधनम्**[3] इति सिद्धाऽभिन्नसाधुशब्दानां या सिद्धतानिष्पादनप्रणाली सा यद्यपि भिन्ना भिन्ना तथापि स्मृतिमूलकपाणिनीयव्याकरणेनैव येषां शब्दानां साधुत्वं फलति ते शब्दाः एवाधुना साधुतां भजन्ति। इतरेऽपशब्दाः एव। काव्यादिषु पुराणेषु च येषां केषाञ्चिच्छब्दानां साधुत्वं न सम्भवति पाणिनीयव्याकरणेन तेषां शब्दानां साधुत्वं शिष्टप्रयुक्तत्वात् विज्ञेयम्। शिष्टत्वञ्चात्र आप्तत्वमेव। तस्मात् पाणिनीय-व्याकरणेन शब्दस्य साधुत्वाभावेऽपि, आप्तपुरुषप्रयुक्तशब्दः साधुर्भवति। तत्रानाद्यवच्छिन्न-परम्परयाप्राप्तशब्दानां साधुत्वख्यापनाय पाणिनिना षड्विधानि सूत्राणि रचितानि, तेषु सूत्रेषु तृतीयाविभक्तिविधाननिर्णायकमन्यतमं सूत्रं वर्तते **इत्थं भूतलक्षणे**[4] इति अष्टाऽध्यायीपाठक्रमे सूत्रमिदं द्वितीयाऽध्यायस्य तृतीयपादस्य, एकविंशतिसंख्याकम्। प्रक्रियाक्रमे तु कारकप्रकरणे पठितम्। अनेन सूत्रेण किं भवति कुत्र च तत्प्रवृत्तिः, अनेन सूत्रेण यद्भवति तदन्येन सूत्रेण भवितुमर्हति नवेति विषयाः विचारणीयाः वर्तन्ते। तत्र सूत्रव्याख्यान-पुरस्सरं पूर्वोक्ताः विषयाः आलोच्यन्ते।

---

*सहायकाचार्यः व्याकरणविभागः राष्ट्रियसंस्कृतविश्वविद्यालयः (मानितविश्वविद्यालयः) एकलव्यपरिसरः अगरतला त्रिपुरा

1. प्रदीपोद्योत समलंकृत पस्पशाह्निक व्याकरण माहाभाष्य पृष्ठसंख्या. 72 प्रकाशक. चौखम्भा संस्कृत प्रतिष्ठानम्
2. प्रदीपोद्योत समलंकृत पस्पशाह्निकव्याकरण माहाभाष्य पृष्ठसंख्या 72 प्रकाशक. चौखम्भा संस्कृत प्रतिष्ठान
3. पण्डित वेदानन्द झा विरचित आनन्दा, सूर्यमाया'' द्रव्येश झा प्रणीत ''प्रत्येकार्थप्रकाशिका'' इति टीकात्रय
4. समलंकृत वाक्यपदीय व्रह्मकाण्ड कारिका संख्या 29 प्रकाशक मन्दाकिनी संस्कृत विद्यापरिषद् दिल्ली
   पा. सूत्र 02 / 03 / 21

यत: सूत्रघटकपदानामर्थज्ञानमन्तरा सूत्रतात्पर्यं न ज्ञातुमर्हति अत: पूर्वं सूत्रघटकपदानां निर्वचनं क्रियते। अनेन प्रकारेणेति विग्रहे **इदमस्थमु:**[1] इति सूत्रेण प्रकारेऽर्थे थमुप्रत्यये कृते सति इत्थं शब्दो निष्पद्यते। प्राप्त्यर्थकात् चुरादिगणपठितात् भूधातुना कर्तरि क्तप्रत्यये कृते सति भूतशब्दो निष्पद्यते। भूतशब्दस्य कर्मषष्ठ्यन्तेनेत्थं शब्देन सह तत्पुरुषसमास:। लक्ष्यतेऽनेनेति विग्रहे चुरादिगणे पठित: दर्शनार्थकलक्षधातुना **करणाधिकरणयोश्च**[2] इति सूत्रेण करणेऽर्थे ल्युट्प्रत्यये कृते सति लक्षणेति शब्द: साधुतां याति। सूत्रे इत्थं शब्द: प्रकारमात्रार्थक:। यद्यपि **कृत्तद्धितसमासैक सनाद्यन्तधातुरूपा: पञ्चवृत्तय:**[3] भवन्ति व्याकरणनये, पञ्चष्वपि वृत्तिष्वेकार्थीभाव: स्वीकृत: वैय्याकरणै:। यत्र चौकार्थीभाव: तत्र सर्वत्र प्रकृतिप्रत्ययविशिष्टसमुदायेनैवार्थोपस्थिति: न तु मात्र प्रकृत्या न वा मात्र प्रत्ययेन प्रथक्-प्रथक्। प्रकृते इत्थं शब्देऽपि तद्धितवृत्ति:, अतोऽत्रापि इदमर्थनिष्ठप्रकारतानिरूपिता या थमुप्रत्ययार्थनिष्ठाविशेष्यता तादृशविशेष्यताक एव शाब्दबोधो भवितव्य:, तथापि प्रकृत्यर्थस्येदमर्थस्याऽतन्त्रत्वेन इत्थं शब्द: प्रकारमात्रार्थकत्वेन दोषाऽभावात्। प्राप्तिरूपार्थको भूतपदार्थ:. लक्षणशब्दस्य ज्ञापकत्वमर्थ:। ''कतृकरणयोस्तृतीया'' इत्यत: तृतीयेति पदमनुवर्तते। एवं सति सूत्रार्थो भवति यत् विशेषणविशेषप्राप्तस्य ज्ञापकं यत् तस्मात् तृतीया। अर्थात् कश्चित् विशेषगुणेन युक्तो य: कर्ता तत्कतृवृत्तिविशेषगुणस्य ज्ञापको य: ततो तृतीयाया: अनुशासनं भवत्यनेन सूत्रेण। थमुप्रत्ययार्थप्रकारेण किं विवक्षितमिति जिज्ञासायाह न्यासकारो यत् **सामान्यस्य भेदको विशेष: प्रकार:**।[4] अयं भाव:, प्रत्येकस्मिन्नपि द्रव्ये एक: सामान्यधर्मो भवति, अपरश्च विशेषधर्म:, यथा पृथिव्यां सामान्यधर्मो द्रव्यत्वम्, द्रव्यत्वस्य नवद्रव्येषु विद्यमानत्वात्। पृथ्वीत्वन्तु विशेषधर्म: पृथ्वीमात्रवृत्तित्वात्। एवमेव नवद्रव्येष्वियं व्यवस्था। अत एव द्रव्याणां नवधा विभाग: संगच्छते। एवञ्च वक्तुं शक्यते यत् एकस्मिन् द्रव्ये विद्यमानयो: व्याप्यव्यापकधर्मयो: यो ज्ञापक: तत: तृतीयाविभक्तिर्साधुर्भवति। यथा शिखया परिब्राजक:। अत्र हि सामान्यत्वेन विवक्षितव्यापकीभूतो धर्मोमनुष्यत्वम्। मनुष्यमात्रवृत्तित्वात्। मनुष्यत्वव्याप्यो धर्मो विशेष्यत्वेन विवक्षितं परिब्राजकत्वम्, तत्परिब्राजकत्वस्य ज्ञापिका शिखा, अत: शिखापदात्तृतीया। अतोऽत्र लक्षणशब्दो ज्ञापकार्थबोधक:।

**लक्षणपदार्थविचार:-**

ननु पाणिनीयव्याकरणे लक्षणपदघटितानि नाना सूत्राणि सन्ति। यथा **अनुर्लक्षणे**[5]

---

1. पा. सूत्र 05/ 03/ 24
2. पा. सूत्र 03/ 03/ 117
3. लघुसिद्धान्त कौमुदी केवल समासप्रकरण
4. जिनेन्द्रबुद्धि विरचित न्यास एवं हरदत्त विरचित पदमञ्जरी तथा जयप्रकाश त्रिपाठी विरचित हिन्दी इति टीकात्रय समलंकृत काशिकावृत्ति भाग तृतीय पृष्ठसंख्या 30 प्रकाशक ताराबुक एजेन्सी वाराणसी संस्करण प्रथम सन 1986
5. पा. सूत्र 01/ 04/ 48

**लक्षणेत्थंभूतख्यानभागवीप्सासु प्रतिपर्यनवः**[1] **इत्थं भूतलक्षणे**[2] **प्रत्ययलोपे प्रत्ययलक्षणम्**[3] तत्राऽवश्यमेव विभावनीयं यत् सर्वत्र समानार्थक एव लक्षणशब्दः, अथवा अस्ति कश्चन भेदः, तत्र ''अनुर्लक्षणे'' लक्षणशब्दः हेतुपरः, महाभाष्यप्रामाण्यात्। अस्मिन्नेव सूत्रे महाभाष्ये **अनुर्हेतौ इति वार्तिकव्याख्यानप्रसङ्गे भणितं यत् लक्षण ेन हेतुरपि व्याप्तो भवति, नहि अवश्यं तदेव लक्षणं भवति येन पुनः पुनः लक्ष्यते, किं तर्हि यत् सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणं भवति**[4]। अनेन भाष्येण स्पष्टमेव यदस्मिन् सूत्रे लक्षणशब्दो हेतुबोधकः। लक्षणेत्थम्, इति सूत्रे लक्षणशब्दः परिचायकत्वरूपार्थबोधकः परिचायकत्वं नाम ज्ञापकत्वम्। इत्थं भूतख्इति सूत्रेऽपि लक्षणपदार्थः परिचायकत्वरूपार्थबोधक एव। परञ्च जपमनु प्रावर्षत, वृक्षं प्रति विद्योतते विद्युत्, जटाभिस्तापसः, इत्यादिवाक्यानां यः शाब्दबोधः प्रदर्शितः शेखरकृता तेन लक्षणपदघटितकर्मप्रवचनीयसंज्ञा विधायकसूत्रयोः, इत्थं भूत इति सूत्रे च न लक्षणशब्दः व्युत्पत्तिलभ्यार्थबोधकः, अपितु परिभाषिक एव, सा च परिभाषा कीदृशी लक्षणशब्दस्येति जिज्ञासायामाह शेखरकारो यत् **ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्**[5] इयञ्च परिभाषा सर्वत्र घटते। यथा जपमनु प्रावर्षत, इत्यत्र, आर्द्रां मृत्तिकां दृष्ट्वा वृष्टिर्जातेति तु निश्चितः, किन्तु वृष्टेरभावाभावस्य कालकारणयोरविज्ञातमेव। अत एव कदा वृष्टिः जातेति प्रश्ने पर्जन्यः जपमनु प्रावर्षत, इत्युत्तरवाक्यं समीचीनं भवति। अत्र हि प्रमाणान्तरेण वृष्टिर्ज्ञानं भवति वृष्टिनिष्ठजन्यता निरूपिता जनकताजपे तद्विषयः जप एव। एवमेव वृक्षं प्रति विद्योतते विद्युत, इत्यत्र कृष्णपक्षरात्रावन्तस्थः पुरुषो विद्युतमपश्यन्नपि वृक्षप्रकाशेन विद्युत् विद्योतनमनुमिनोति। प्रकारान्तरेण वृक्षप्रकाशाऽसम्भवादिति रीत्या विद्युज्ज्ञाननिष्ठ जन्यतानिरूपिताजनकतावृक्षप्रकाशेतद्विषयो वृक्ष एव। जटाभिस्तापसः, इत्यत्रापि शमदमादिजन्यं यत्तापसत्वविशिष्टतापसज्ञानं तादृशतापसज्ञाननिष्ठजन्यतानिरूपिता जनकता जटासु, तद्विषयता जटास्वेव। जन्यता च ज्ञापकता रूपा। एवं रीत्या सर्वत्र ज्ञान-जनकज्ञानविषयत्वरूपं लक्षणलक्षणं संघटते। ननु यथा ज्ञानजनकज्ञानविषयत्वेन जटालक्षणं भवति, तथा ज्ञानजन्यज्ञानविषयत्वात् तापसो लक्ष्यः, यतो जटाभिः तापसो ज्ञातो भवति, अतः जटानां ज्ञानक्रियायाः करणत्वे **कर्तृकरणयोस्तृतीया**[6], इति सूत्रेणैव तापसादिज्ञापक-जटादिपदात्तृतीयासम्भवे ''इत्थंभूतलक्षणे'' इति सूत्रमनर्थकमिति

---

1. पा. सूत्र 01/ 04/ 90
2. पा. सूत्र 02 / 03 / 21
3. पा. सूत्र 01/ 01/ 62
4. प्रदीपोद्योत समलंकृत व्याकरण माहाभाष्य भाग पृष्ठसंख्या प्रकाशक. चौखम्भा संस्कृत प्रतिष्ठान
5. पं ताराकान्त झा विरचित दीपिका नाम्नी हिन्दी टीका समलंकृत लघुशब्देन्दुशेखर तृतीयो भाग कारकप्रकरण
6. पृष्ठसंखख्या 110 प्रकाशक कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालय विहार संस्करण प्रथम सन 2003 पा. सूत्र 02/ 03 / 18

चेन्न। ''विवक्षातः कारकाणि भवन्ति'' इति सिद्धान्तरीत्या यदा करणत्वस्याऽविवक्षा लक्ष्यलक्षणभावस्य च विवक्षा तदा करणतृतीयाः प्राप्त्यभावे लाक्षणवाचकेभ्यः पदेभ्यः तृतीयाऽनुशासनाय सूत्रमावश्यकम्। ननु व्यावृत्तिः व्यवहारो वा लक्षणस्य फलद्वयम्, इति शिष्टोक्तदिशा यल्लक्ष्यमुद्दिश्य लक्षणं क्रियते तत्क्रियमाणं लक्षणं समानासमानजातीयेभ्यो लक्ष्यं व्यावर्तयति। यथा गन्धवत्वं प्रथ्वी, इत्यत्र लक्षणं गन्धवत्वं लक्ष्या प्रथ्वी, तत्र गन्धवत्वलक्षणेन द्रव्यत्वेन सजातीयानां द्रव्यान्तराणां जलादीनां व्यावृत्तिः भवति, गन्धस्य पृथ्वीतरद्रव्येषु वृत्तित्वाभावात् पृथ्वी-मात्रवृत्तित्वात्। एवमेव असमानजातीयाः ये गुणाः तेषामपि व्यावृत्तिर्भवति गुणे गुणो नाङ्गीकार्यः, इति सिद्धान्तरीत्या गुणान्तरेषु गन्धवत्वाभावात्। प्रकृतेऽपि लक्षणत्वञ्च व्यावर्तकत्वमेव किन्तु समानाऽसमानजातीयानां व्यवच्छेदकत्वाऽभावात् लक्षणं न भवितुमर्हतीति चेन्न। शिखया परिव्राजकः, इत्यत्र लक्षणपदवाच्या शिखा सा शिखा परिव्राजके यन्मनुष्यत्वं तन्मनुष्यत्वसजातीयानां पुरुषान्तराणां व्यावर्तनं करोति, असमानजातीयानां पशूनाञ्च व्यावर्तनं कृत्वा लक्षणपदवाच्या भवति। वस्तुतस्तु ''इत्थंभूतख्र सूत्रे लक्षणपदबोध्यं किमपि प्रातिपदिकमेव।

एतावता प्रबन्धेन मया लक्षणस्य लक्षणोपरि विचारः कृतः, अधुना इत्थंभूतेति सूत्रे लक्षणत्वं व्यावर्तकत्वं मत्वा विचारमुपस्थापयामि। अत्र लक्षणत्वं व्यवच्छेदकत्वम्, तच्च विशेष्यतावच्छेदकसमानाऽधिकरणाऽभावप्रतियोगित्वम्। इदं तात्पर्य यत् यथा बह्निधूमयोः व्याप्तिरूपः सम्बन्धः स्वाभाविकः न तथा जटातापसयोः, यतोहि यथा यत्र-यत्र धूमः तत्र तत्र वह्निः इति नियमो विद्यते तथा यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभावः इत्यपि नियमः धूमस्य वह्निजन्यत्वात्। वह्न्यभावाधिकरणे धूमस्याऽविद्यमानत्वाच्च। प्रकृते यत्र यत्र तापसत्वं तत्र तत्र जटा इति नियमो नास्ति जटाऽभावेऽपि तापसत्वस्य दृष्टत्वात्। एवमेव यत्र यत्र जटाऽभावः तत्र तत्र तापसत्वाभावः इत्यपि नियमो नास्ति तापसत्वाभावेऽपि जटा दृष्टत्वात्। तस्मात् जटातापसत्वयोः स्वभाविकसम्बन्धाऽभावात्, अन्य एव कश्चन सम्बन्धः कल्पनीयः स च सम्बन्धः ज्ञाप्यज्ञापकभावः एव। एवं रीत्या जटाभिस्तापसः इत्यत्र विशेषधर्मतापसत्वस्य मनुष्यस्य भेदकत्वात्। यतो विशेषता तापसे वर्तते, अतो विशेष्यतावच्छेदकत्वं तापसत्वं तत्समानाधिकरणभूतायाः जटायाः तापसत्वाऽधिकरणे मनुष्ये विद्यमानत्वेन न तदभावो धर्तुं शक्यते, अपितु तदितरस्यैव। अतः तापसत्वविशिष्टे मनुष्ये यस्य जटेतरस्याभावः, तदभावस्य प्रतियोगी, इतर एव, अप्रतियोगी जटा। यतोहि तापसत्वावच्छिन्ने कस्मिंश्चित् तापसे जटानां वर्तमानत्वात्। एवञ्च जटासु व्यवच्छेदकत्व-सम्भवेन लक्षणवाचकतासिद्धत्वात् तृतीया साधुर्भवति। एवमेव शिखया परिव्राजकः, कमण्डलुना छात्रः, इत्यादिवाक्येष्वपि बोध्यम्।

**विशेषणोपलक्षणयोर्भेदविचारः-**

ननु विशेष्यतावच्छेदकसमानाधिकरणाऽभावाऽप्रतियोगित्वरूपं यत् व्यावर्तकत्वं-व्यवच्छेद्यत्वं वा तदाश्रयो धर्मो द्विविधः। विशेषणमुपल क्षणञ्चेति भेदात्।

तत्र विद्यमानं सदितरव्यावर्तकं विशेषणम्। अविद्यमानं सदितरव्यावर्तक मुपलक्षणं भवति। यथा दण्डी पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डः पुरुषान्तरं व्यावर्तयति। अतोऽत्र पुरुषे दण्डो विशेषणम्। काकेन देवदत्तगृहाः इत्यत्र वर्तमानकालावच्छेदेन काकस्य विद्यमानत्वाभावेऽपि देवदत्तेतरगृहाणां व्यावर्तकत्वेन काकः उपलक्षणम्। इदमत्रतत्त्वं यत् व्यवच्छेद्यता समानरूपेण विशेषणे, उपलक्षणे च वर्तते, एवं सति विचारणीयो यत् जटाभिस्तापसः, इत्यत्र तापसस्य विशेषणं जटा, उपलक्षणं वा। अत्रोच्यतेख्र्यदि तापसे जटा वर्तमानकालावच्छेदेन संयोगसम्बन्धेन विद्यते चेत् तदा जटा विशेषणम्। यदि च तापसे संयोगसम्बन्धेन वर्तमानकालावच्छेदेन जटानामभावः तदा जटा तापसस्योपलक्षणम्। ननु **तदस्याऽस्त्यतस्मिन्**[1] इति सूत्रे, अस्ति पदं वर्तमानकालावच्छिन्नसत्ताबोधकम्, तच्च मतुप्निष्ठविधेयतानिरूपिता या उद्देश्यतावच्छेदकीभूता प्रकृतिः तत्र विशेषणम्. तथा च यस्मिन् द्रव्ये संयोगसमवायान्तरसम्बन्धेन ययोः गुणद्रव्ययोः सत्ता वर्तमानकालावच्छेदेन बोधयितुमिच्छति ततो मतुप्प्रत्ययः। यथा रूपवान् घटः'' इत्यत्र घटे समवायसम्बन्धेन रूपस्य सत्ता वर्तमानकालावच्छेदेन बोधविवक्षायां रूपशब्दात् मतुप्प्रत्ययः। दण्डवान् पुरुषः इत्यत्र पुरुषे संयोगसम्बन्धेन दण्डस्य सत्ता वर्तमानकालावच्छेदेन बोधतात्पर्ये दण्डशब्दात् मतुप्प्रत्ययः। एवं सति जटाभिस्तापसः इत्यत्रापि तापसे संयोगसम्बन्धेन जटासत्ता वर्तमानकालावच्छेदेन बोधतात्पर्ये जटाशब्दादपि मतुप्प्रत्यये जटाभिस्तापसः इत्यर्थे जटावान् तापसः इति प्रयोगापत्तेरिति चेन्न। यतो मत्वर्थीयाः प्रत्ययाः संयोगसमवायान्यतरसम्बन्धेन विद्यमानसम्बन्धस्यैव बोधकाः भवन्ति, न त्विद्यमानस्य। जटा तु संयोगसम्बन्धेन यथा तापसाद्युपलक्षणविधया बोधकम्, तथा संयोगसम्बन्धावच्छिन्नजटात्वावच्छिन्नप्रतियोगिताकाऽभावेऽपि पुरुषे तापसत्वपरिचायकद्वारा पुरुषान्तरं व्यावर्तयति। तस्मात् इत्थंभूतेति, अनुशासिततृतीयायाः ''तदस्याऽस्त्यतस्मिन् मतुप्'' इति सूत्रेणाऽनुशासितमतुप्प्रत्ययस्य समानविषयकत्वाभावान्न तृतीयास्थले मतुप्प्रत्ययापत्तिः न वा मतुप्प्रत्ययस्थले तृतीयापत्तिः।

**मत्वर्थीयप्रत्ययानां तृतीयया सह भेदविचारः-**

मत्वर्थीयाः मतुबादिप्रत्ययाः संयोगसमवायान्यतरसम्बन्धेन वर्तमानकालिकस्वप्रकृतिक-पदार्थभूतगुणद्रव्ययोः द्रव्यान्तरे सत्ता बोध्यते। इत्थं भूतेति सूत्रेणानुशासिता तृतीया तु संयोगसम्बन्धेन तृतीयाप्रकृतिकपदार्थस्य द्रव्यान्तरे सत्ता बोध्यते। अतः परिव्राजके शिखायाः सत्वे यथा तृतीया तथा शिखायाः अभावेऽपि परिव्राजकपदात्तृतीया। यतो तृतीया विद्यमानाऽविद्यमानयोः सम्बन्धस्य बोधिका अतः क्वचित् विशेषणवाचकपदादपि तृतीया भवति। यथा ज्ञायमानत्वेन लिङ्गं करणम्। अत्र हि ज्ञायमानशब्दे वर्तमानकालरूपार्थबोधकः शानच्प्रत्ययः, अतो वाक्यार्थो भवति यत् वर्तमानकालिकज्ञानविषयीभूतं लिङ्गं करणम्। अर्थात् तदेव लिङ्गं करणं यो वर्तमानकालिको ज्ञानविषयः। एतद्वाक्ये ज्ञायमानपदे या तृतीया सा विशेषण एव। यतोहि करणपदार्थे

1.पा. सूत्र 05/ 02/ 43

लिङ्गपदार्थस्याऽभेदेनाऽवय:,पदार्थान्तरेऽभेदेनाऽन्विते लिङ्गपदार्थे ज्ञायमानत्वपदार्थस्य स्वरूपसम्बन्धेनाऽन्वय: अतो लिङ्गपदार्थनिष्ठ–विशेष्यतानिरूपितास्वरूपसम्बन्धावच्छिन्ना प्रकारता ज्ञायमानत्वपदार्थे सत्वेन तृतीया विशेषणवाचकपदादेव। अत एव ज्ञायमानत्व लिङ्गस्यैव करणत्वं स्वीक्रियते। अन्यथा लिङ्गज्ञानाभावेऽप्यनुमितेरापत्ति:। ननु इत्थंभूतेति सूत्रेणानुशासिता या तृतीया सा यथा विद्यमानस्य प्रत्यायिका तथा अविद्यमानस्यापि, किन्तु कुत्र विद्यमानस्य बोधिका कुत्र चाविद्यमानस्य बोधिकेत्यत्र विनिगमनाभावात् विद्यमानस्थलेऽविद्यमानस्य, अविद्यमानस्थले च विद्यमानस्य प्रतीत्यापत्तौ जटाभिस्तापस: इत्यत्र तापसे जटासत्वे तदभावस्य जटाऽसत्वे तद्भावस्य च ज्ञाने सति विशेषणोपलक्षणयोर्लक्षणे शाङ्कर्यापत्तिरिति चेन्न। तृतीयया विद्यमानाऽविद्यमानयो: प्रत्यायने नियामिका योग्यतैवेति स्वीकारेणादोषात्। अर्थात् यत्र तृतीया प्रकृत्या सत्वप्रत्यायने योग्यता तत्र तृतीयया सत्ताया: बोध:। यथा ज्ञायमानत्वेन लिङ्गं करणमित्यत्र। यत्र च न तथा योग्यतातत्राऽविद्यमानस्य बोध:। ननु ज्ञायमानत्वेन लिङ्गमेव करणमित्यत्र ज्ञायमानत्वपदोत्तरतृतीयया ज्ञायमानत्ववैशिष्ट्यं लिङ्गादौ बोध्यते, विशेषणवाचकपदात्तृतीयाविधानात्। अत एवायं सिद्धान्त: प्रतिष्ठितो जातो यत् ज्ञानविषयीभूतं लिङ्गमेव सर्वत्रसाध्यानुमापकं भवति, न त्वज्ञातं लिङ्गमिति। परञ्च नेदं समीचीनं प्रतिभाति। यतोहि धूमादौ करणत्वज्ञाने वर्तमाने सत्येव धूमादीनां करणत्वस्वीकारात्। ज्ञायमानत्वं करणत्व एव विशेषणम्, तस्माज्ज्ञायमानत्वोत्तरतृतीयया करणत्वस्यैव वैशिष्ट्यं बोध्यतेन तु लिङ्गस्येति चेन्न। नच पदार्थ: पदार्थेनान्वेति न तु पदार्थैकदेशेनेति सिद्धान्तात् लिङ्गस्यैव वैशिष्ट्यबोधसम्भव: करणत्वस्य पदार्थैकदेशत्वादिति वाच्यम्। बहुषु स्थलेषु व्युत्पत्तिवैचियात् पदार्थैकदेशेप्यन्वयस्वीकारादिति चेन्न। करणत्वादौ ज्ञायमानत्वावच्छिन्नत्वलाभाय ज्ञायमानत्वपदार्थस्य करणत्वेऽन्वयेऽपि ज्ञायमानत्वपदे विशेषणतृतीयैव सम्भवति नत्वन्या तृतीया, अनुशासनान्तराऽभावात्। परञ्चेदं न समीचीनं प्रतिभाति। ''प्रकृत्यादिभ्य उपसंख्यानम्'' इत्यनुशासनस्य विद्यमानत्वात्। ननु ज्ञायमानत्वेन लिङ्गं करणमिति वाक्ये ज्ञायमानत्वपदार्थस्य लिङ्गपदार्थेऽन्वयं त्यक्त्वा करणपदार्थेऽन्वय: किमर्थं क्रियते, यदि करणत्वस्य ज्ञायमानत्वलाभाय स्वीक्रियते, तदा तल्लाभ: लिङ्गपदार्थाऽन्वयेऽपि सम्भवति, यतोहि यथा लिङ्गे ज्ञायमानत्वमस्ति तथा करणत्वमप्यस्ति, एवञ्च धूमरूपे लिङ्गे करणत्वज्ञायमानत्वयो: समानाधिकरण्येन परस्परमवच्छेद्यावच्छेदकभाव:, तथा च ज्ञायमानत्वेनावच्छेदकं लिङ्गं करणत्वेनावच्छेद्यम्। तस्मादवच्छेद्यावच्छेदकभावेन करणत्वस्यापि ज्ञायमानत्वे सिद्ध एकादेशान्वयोऽनुचित:। ननु करणत्वे ज्ञायमानत्वावच्छिन्नप्राप्त्यर्थमेव करणत्वे ज्ञायमानत्वावच्छिन्नस्याऽन्वय: तल्लाभश्च लिङ्गेऽन्वयं विधायोपपादित: करणत्वज्ञायमानत्वयो: परस्परमवच्छेद्यावच्छेद्यभावोऽपि प्रतिपादित:, किमेतावता एकदेशान्वयवारितो जात: इति विचार्यमाणे सतीदमेव प्रतीयते यत् समानाधिकरण्येन परस्परमवच्छेद्यावच्छेदकभावे जाते मात्र करणत्वे ज्ञायमानत्वावच्छिन्नस्यैव लाभ: न त्वेकदेशाऽन्वयो वारित:। तस्मात् पुन: एकदेशान्वय: प्राप्त एवेति चेन्न। करणकरणत्वयो: न घटघटत्वयोरिव समवाय: किन्त्वभेद एव। करणकरणत्वयोरभेदपक्षे

करणत्वे ज्ञायमानत्वपदार्थस्याऽन्वयेन करणेऽपि तदन्वयः प्राप्तः, किन्तु ज्ञायमानत्वस्य करणे केन सम्बन्धेनाऽन्वयः इति जिज्ञासायां करणत्वसम्बन्धेनैवान्वयो वक्तव्यः। अथ च करणकरत्वयोरभेदे करणत्वस्य करणे तादात्म्यसम्बन्धेनाऽन्वयः, एवं रीत्या करणे ज्ञायमानत्व करणत्वयोश्च समानाधिकरण्यम्। तथा च ज्ञायमानत्वकरणत्वयोरस्मिन्पक्षेऽपि परस्परमवच्छेद्यावच्छेदकभावेन करणत्वस्य ज्ञायमानत्वच्छिन्नमक्षतमेव। यतोऽत्र करणत्वस्य भानं संसर्गतावच्छेदकतया जातम्, पदार्थः पदार्थेनाऽन्वेति न तु पदार्थैकदेशेन'' इति व्युत्पत्तिविरोधविषयः प्रकारभूतपदार्थैकदेशाऽन्वय एव न तु संसर्गभूतपदार्थैकदेशान्वयः इति रीत्या दोषाभावात। ननु पूर्वम्, इत्थंभूतेत्यनुशासनेन लक्षणवाचिपदादनुशासिता या तृतीया तद्स्थले मतुबादिप्रत्ययानामप्राप्त्युपपादनाय यो विषयविभागः कृतो यत् तृतीया विद्यमानाऽविद्यमानयोरुभयोः सम्बन्धबोधिका। मत्वर्थीयप्रत्याः विद्यमानसम्बन्धस्यैव बोधकाः इति तन्न समीचीनं प्रतिभाति, यतोहि एतद् सिद्धान्तस्वीकारे दण्डवानयमासीत्, दण्डी गतवान्, इत्यादौ मतुबादयो न भविष्यन्ति। दण्डानामतीतत्वेन विद्यमानत्वाभावादिति चेन्न। मत्वर्थीयमतुबादिप्रत्याः यत् विशेषणवाचकात् भवन्ति तद्विशेषणवाचकपदार्थस्य संयोगसमवायान्यतरसम्बन्धेन सम्बन्धं बोधयन्ति विशेष्ये, स च सम्बन्धो वर्तमानकालिकः स्यात् भूतकालिको वेत्यत्र नास्ति कश्चनाग्रहः। यथा दण्डवान् पुरुषः इत्यत्र दण्डनिष्ठाऽध ेयतानिरूपिताऽधिकरणता पुरुषे भाषते। अत्राऽधारतायाः नियामकः सम्बन्धः संयोगः, अयञ्च संयोगः दण्डादिप्रयोगाधिकरणकालिक एव। दण्डस्य प्रयोगाधिकरणकाले विद्यमानत्वात्। दण्डीपुरुषः आसीदयमित्यत्रापि दण्डस्याधिकरणता संयोगसम्बन्धेन पुरुषे भाषते, किन्त्वयं दण्डपुरुषयोरधिकरणतानियामकः संयोगः अतीतकालिकः। यतोहि दण्डसत्तैव पुरुषे विधेया। सा च सत्ता दण्डादिशब्दप्रयोगकालिकी स्यात् आहोस्विदातीत कालिकं यत्सत्वादिरूपं विधेयं तादृशविधेयाधिकरणीभूतो योऽतीतकालः तदृशकालावच्छिन्न दण्डादिसम्बन्धरूपा स्यादित्यत्र नास्ति कश्चिद्धानिः। विशेषणवाचकपदार्थसम्बन्धरूप मतुबर्थस्य प्रतीतौ वर्तमाने, अतीतौ च बाधाभावात्। अयं दण्डी पुरुषः आसीदित्यत्र न मतुबादिप्रत्ययविधाने काऽपि प्रतिबन्धकता। न च विशेषणवाचकपदादेव मत्वर्थीयाः प्रत्ययाः भवन्ति, विशेषणत्वञ्च विद्यमानस्यैव भवति , न त्वविद्यमानस्य। अन्यथा उपलक्षणविशेषणयोः भेदविलयः स्यात, एवं सति दण्डवानयमासीदित्यत्र पुरुषसस्याविद्यमानत्वेन पुरुष-विशेषणत्वाऽसम्भवे मतुप्प्रत्ययः असम्भव एवेति न वाच्यम। यथा दण्डवान् पुरुषः अस्ति, इत्यत्र पुरुषसमानकालिकदण्डस्य विद्यमानत्वेन दण्डो विशेषणमेव भवति तथा दण्डवान् पुरुषोऽयमासीदित्यत्रापि यस्मिन् काले दण्ड आसीत्तस्मिन् काले पुरुषस्यापि विद्यमानत्वेन पुरुषो विशेषणत्वे बाधकाऽभावेन न मतुप्प्रत्ययोत्पत्तौ काचित् प्रतिबन्धकता। **अत एव मतुप्प्रत्ययविधायके सूत्रे**[1] अस्तिं पदं न वर्तमानकालिकः सत्तार्थबोधकः किन्तु, धनरूपार्थ-वाचकादस्तिशब्दात् मतुप्प्रत्ययानन्तरम् अस्तिमान्

1.तदस्याऽस्त्यतस्मिन् मतुप्

इति शब्दस्य साधुत्वं यथा स्यात् तदर्थं स्वीकृतम्। तस्मात् दण्ड: पुरुषविशेषणमेव न त्वुपलक्षणम्।

**2. विशेषणोपलक्षणयो: द्वितीयो भेद:।**

विशेषणोपलक्षणयोरेकं स्वरूपं विद्यमानत्वे सति, अविद्यमानत्वे सति चेत्यादि रीत्योक्तम्। द्वितीयं स्वरूपं किं भवितुं शक्नोति उपलक्षणस्येति वक्तुमाह यत् **विधेयान्तरसमानकालीनमपि विशेषणं तदन्वयितया तदनवयिन्युप-लक्षणम्**[1] यथा सास्नावान् गोपदवाच्य:। अत्र हि पुरुतो दृश्यमानस्य सास्नादिमत्पदार्थस्य गोसंज्ञा कृता शास्त्रकारै:, अतो गवि यथा वाच्यता विधेया वर्तते तथा पशवन्तराणां व्यावृत्तये सास्नाऽपि विशेषणं वर्तते, एवञ्च यस्मिन् काले विधेयान्तरं गोपदवाच्यत्वं गवि विद्यते तस्मिन्नेव काले सास्नाविशेषणत्वमपि वर्तते। अतो विधेयान्तरसंज्ञासमानकालीनं यत् विशेषणत्वेन विद्यमाना सास्ना गोपदवाच्यत्वानऽन्वयितया उपलक्षणम्। यच्चान्वयी तद्विशेषणम्। इदं तात्पर्यम्, यत्पदार्थस्य या संज्ञा क्रियते तत्पदार्थसंज्ञानन्वययुपलक्षणं भवति, यस्य संज्ञा क्रियते तदन्वयी विशेषणं भवति। यथा प्रकृते सास्नादिमत्पदार्थस्य गोसंज्ञा क्रियते गोसंज्ञायामनन्वयी सास्ना उपलक्षणम्, सास्नादिमत्पदार्थाभिन्ने गव्यन्वयिनी सास्ना विशेषणम्।

**3. विशेषणोपलक्षणयो: तृतीयो भेद:**

अपि च धर्मिसम्बद्धधर्मान्तरसम्बन्ध्यपि धर्म: धर्मान्तरसम्बन्धतानवच्छेदकतया धर्मान्तरसम्बन्धिन्युपलक्षणं भवति। यथा दण्डीपुरुषो, इति समूहालम्नात्मकं ज्ञानम्। दण्डीपुरुषौ, इत्यत्र धर्मी पुरुष: तत्सम्बद्धधर्मान्तरं वर्तमानकालिकं सत्वं तच्च यथा पुरुषे तथा दण्डेऽपि, किन्तु दण्डो वर्तमानकालिकसत्वस्य सम्बन्धितावच्छेदको नास्ति, वर्तमानकालिकसत्वस्य सम्बन्धितावच्छेदकत्वेनाऽप्रतीयमानत्वात्। संयोगसम्बन्धेन पुरुषसम्बन्धितावच्छेदकत्वेनैव प्रतीयमानत्वात्। अत: एतत्समूहालम्बनात्मकज्ञाने दण्ड उपलक्षणमेव। अत्राप्यं निष्कर्ष:, यस्य धर्मस्य धर्मिणि स्वसमानकालिकधर्मान्तरे चान्वयो भवति तत् विशेषणम्। यस्य चान्वयो न भवति तदुपलक्षणम्। यथा दण्डी पुरुष: अस्ति, इत्यत्र वर्तमानकालिकसत्वस्य पुरुषान्वयवत् पुरुषान्वितदण्डेऽप्यन्वयो भवति, अत: पुरुषं प्रति दण्डो विशेषणम्, पुरुषपदवाच्यत्वं प्रत्युपलक्षणम्।

**4. विशेषणोपलक्षणयो: चतुर्थो भेद:**

विशेष्यसम्बद्धधर्मान्तरसम्बन्धितानवच्छेदकमुपलक्षणम् विशेष्यसम्बद्धधर्मान्तर-सम्बन्धितावच्छेकं विशेषणम्। यथा घटो घटपदवाच्य इत्यत्र विशेष्यो घट: तत्सम्बद्धो धर्म: घटत्वं तद्घटत्वाऽसम्बद्ध्यपि संज्ञा घटसम्बद्धघटत्वसम्बन्धितावच्छेदकतया घटे वाच्यत्वसम्बन्धेन संज्ञाविशेषणम्। संज्ञाभिन्न: कश्चिदन्यो धर्म: उपलक्षणं भवति। नच कम्बुग्रीवादिमत्पदार्थाऽभिन्नघटस्य

1.आदर्श टीका समलंकृत व्युत्पत्तिबाद द्वितीयभाग पृष्ठ संख्या 78 सम्पादक प्रो. हरेराम, त्रिपाठी प्रकाशक राष्ट्रिय संस्कृत संस्थान नई दिल्ली संस्करण प्रथम प्रकाशन सन 2011

चक्षुषा प्रत्यक्षं भवति, संज्ञायाः स्मर्यमाणत्वान्न प्रत्यक्षं भवति, अतः कथं चक्षुषा प्रत्यक्षात्मके घटे प्रत्यक्षज्ञानविषयीभूताऽभावरूपासंज्ञाविशेषणमिति वाच्यम्। घटस्य प्रत्यक्षत्वेन संज्ञायाः स्मर्यमाण ात्वेन स्मृतिविषयत्वात्स्वातन्त्येण संज्ञायाः प्रत्यक्षाभावेऽपि संज्ञिनो घटस्य प्रत्यक्षज्ञानविषयत्वेन तद्विशेषणीभूतायाः संज्ञायाः अपि प्रत्यक्षत्वात् पूर्वोक्ताऽनापत्तेः। यतोहि संज्ञायाः घटे विशेषण ातया घटनिष्ठविषयतावच्छेदकत्वेन भासमाणत्वात्। संज्ञायाः प्रत्यक्षविषये प्रभाकरैरप्युक्तं यत् **संज्ञा हि स्मर्यमाणाऽपि प्रत्यक्षत्वं न बाधते, संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा**[1] इति। अर्थात् अयं देवदत्तः इत्यत्र यद्यपि वर्णात्मकं नाम स्मरणनिष्ठम्, न प्रत्यक्षविषयः तेन सह वाच्यवाचकभावोऽपि स्मृतिसमारूढः एव, न प्रत्यक्षविषयः, तथापि संज्ञा प्रत्यक्षतां न मुञ्चति, यतोहि संज्ञा तत्सम्बन्धो वा तदानीमेकज्ञाने विशेष्यत्वेन प्रतिभातः, किन्तु तौ स्मृत्या रूढावेव संज्ञिनि हि दृश्यमाने , प्रागनुभूतौ तौ स्मृतिमारोहतः, इति। तस्मात्संज्ञाविशेषणमेव भवति न त्वुपलक्षणम्।

**5. विशेषणोपलक्षणयोः पञ्चमो भेदः-**

विशेष्यसम्बद्धाऽसम्बन्धिनोऽपि तत्सम्बन्धितावच्छेदक तया यस्य वृत्तिता तद्विशेषणम्। यथा द्वे द्रव्ये। अत्र हि द्रव्यविशेष्यसम्बद्धं वर्तमानकालिकं सत्वं तदसम्बन्धीद्वित्वस्य द्रव्यसम्बन्धितावच्छेदकया सत्ववति द्रव्ये वृत्तितया द्रव्ये द्वित्वं विशेषणम्। द्वित्वस्य सम्बन्धितानवच्छेदकतयोपलक्षणम्।

**6. विशेषणोपलक्षणयोः षष्ठो भेदः-**

ध्वंसाऽभावीयप्रतियोगितावच्छेदकं यत् तद्विशेषणम्। उक्ताऽभावीयप्रतियोगिता-नवच्छेदकत्वमुपलक्षणमम्। यथा नीलो घटो नष्टः। अत्र घटे यथा घटत्वं समवायसम्बन्धेन वर्तते तथा नीलोऽपि समवायसम्बन्धेनैव वर्तते। अपि च घटत्वनीलयोः अभावीयप्रतियोगिताऽपि समानैव, किन्तु ध्वंसाऽभावीयप्रतियोगितावच्छेद कत्वेन घटत्वं घटे विशेषणं भवति। तद्ध्वंसाभावीयप्रतियोगितानवच्छेदकत्वेन नीलः उपलक्षणं भवति घटे। न च घटे नीलस्य समवायः भिन्नः घटत्वस्य समवायः भिन्नः इति रीत्या प्रतियोगिताऽपि भिन्ना- भिन्ना भविष्यतीति वाच्यम। समवायस्य नित्यत्वादेकैव।

**7 विशेषणोपलक्षणयोः सप्तमो भेदः-**

**विद्यमानमप्यतद्व्यावृत्तिन्यूनाधिकवृत्तितया तत्र न विशेषणमुच्यते किन्तूपलक्षणम्**[2] इदं तात्पर्यम्। अत्र हि अतद्व्यावृत्तिपदेन विशेष्यतावच्छेदकरूपा जातिर्ग्राह्या। एवञ्च जटाभिस्तापसः, इत्यत्र जटा तापस उपलक्षणं भवति। यतोहि यत्र यत्र तापसत्वं तत्र तत्र जटेति नियमो नास्ति, तथैव यत्र यत्र जटा

1. आदर्श टीका समलंकृत व्युत्पत्तिबाद द्वितीयभाग पृष्ठ संख्या 80 सम्पादक प्रो. हरेराम, त्रिपाठी प्रकाशक राष्ट्रिय संस्कृत संस्थान नई दिल्ली संस्करण प्रथम-प्रकाशन सन 2011
2. आदर्श टीका समलंकृत व्युत्पत्तिबाद द्वितीय भाग पृष्ठ संख्या 80 सम्पादक प्रो. हरेराम, त्रिपाठी प्रकाशक राष्ट्रिय संस्कृत संस्थान नई दिल्ली संस्करण प्रथम-प्रकाशन सन 2011

तत्र तत्र तापसत्वमित्यपि नियमो नास्ति, अतः तापसत्वे न्यूनाधिकवृत्तिता, तस्मात् विशेष्यतावच्छेदकस्य तापसत्वस्य न्यूनाधिकवृत्तित्वेन तापसे जटा न विशेषणम् किन्तुपलक्षणमेव। इदमत्र फलति। जन्यजनकयोर्मध्ये विशेष्यतावच्छेदकविशिष्टस्य यो जनकः सः विशेषणम्। यथा जटाभिस्तापसः इत्यत्रैव विशेष्यतावच्छेदकतापसत्वविशिष्टस्य तापसस्य जनकः शमदमादिकम्, अतः शमदमादिकं तापसे विशेषणम्। यच्चक्वचित्परिचायकमात्रं तदुपलक्षणम। यथा जटा। जटासु तापसत्वजनकतायाः अभावेऽपि तापसत्वज्ञापकताऽस्त्येव। ननु पूर्वोक्तव्याख्यानेनेदं सिद्धं यत् मत्वर्थीयप्रत्ययेन विद्यमानस्यैव सम्बन्धः प्रत्याय्यते, न तूपलक्षणस्य, तृतीयया तु विशेषणोपलक्षणयोरुभयोः सम्बन्धः प्रत्याय्यत इति मतं दीधितिकाराय न रोचते, यतोहि तन्मते उपलक्षणस्यापि सम्बन्धः मत्वर्थीययेन बोध्यते। यथा अयं घटो विनाशीत्यत्र नष्टविद्यमानयोः परस्परविरोधेन घटे विनाशस्याऽविद्यमानत्वेन विशेषणत्वं न सम्भवति तथापि अविशेषणस्यापि विनाशस्य सम्बन्धो मत्वर्थीयेन विनिप्रत्ययेन प्रतिपाद्यते इत चेन्न। अयं घटो विनाशीत्यत्र विनाशपदोत्तरं मत्वर्थीय विनिप्रत्ययः एव नास्ति येनोक्तरीत्या मत्वर्थीयप्रत्ययस्य, अविशेषणसम्बन्धप्रतिपादकत्वं प्राप्नुयात्, किन्तु, आवश्यकार्थेन धातूत्तरणिनिप्रत्ययेन **आवश्यकाधमर्ण्योः**[1] इति सूत्रात् विधीयमानेन विनाशीपदस्य सिद्धत्वात्।

नन्वेतावता प्रबन्धेन मया विशेषणोपलक्ष्ययोर्मध्ये यो भेदः प्रतिपादितः ते सर्वे ''इत्थं भूतलक्षणे'' इति सूत्रे गदाधरेण व्युत्पत्तिवादस्य द्वितीयाकारके कथिताः, परञ्च नहि मात्र व्युत्पत्तिवादे एव विशेषणोपलक्ष्ययोः भेदाः प्रतिपादिताः सन्ति , अपितु अन्येष्वपि ग्रन्थेषु विशेषणोपलक्ष्ययोर्मध्ये भेदप्रतिपादनं दृश्यते, अतः अधुना ग्रन्थान्तररीत्या भेदान् प्रतिपादयामि।

**विभक्त्यर्थनिर्णयः** विभक्त्यर्थनिर्णयाख्ये ग्रन्थे विशेषणोपलक्ष्ययोर्मध्ये ग्रन्थकारः इत्थं भेदं प्रतिपादयति। स्वसमानकालिकबुद्धिप्रकारः विशेषणम्। स्वाऽसमानकालिक-बुद्धिप्रकारः उपलक्षणम्। प्रकृतविशेषणोपलक्ष्ययोर्लक्षणे स्वं पदेन विशेष्यं ग्राह्यम्। तथा च विशेष्यं यस्मिन् काले बुद्ध्यते तस्मिन् काले विशेष्ये विद्यमानं विशेषणम्। विशेष्यस्य विद्यमानकाले विशेष्येऽविद्यमानमुपलक्षणं भवति। यथा गुरुणा टीका। अत्र टीका पदं विशेष्यम्। एवञ्च विशेष्यभूता टीका यस्मिन् काले बुद्धिविषया भवति तस्मिन् काले यदि गुरुः विद्यते तदा गुरुः विशेषणम्। टीकायाः बुद्धिविषयकाले गुरोरविद्यमानत्वे गुरुः उपलक्षणम्। अथवा यस्यां बुद्धौ यो यत्र प्रकारः सः तत्र विशेषणम्। विशेषणमुपस्थापकं विशेषणमुपलक्षणम्। यथा काकेन देवदत्तस्य गृहमित्यत्र । गृहं नाम संस्थानविशेषः, स च संस्थानविशेषः देवदत्तगृहे विशेषणीभूय भाषते। तथा च विशेषस्य देवदत्तगृहस्य विशेषणं संस्थानविशेषः तस्य विशेषणं अतः काकः उपलक्षणं देवदत्तगृहं प्रति। एवमेवजटाभिस्तापसः, इत्यत्र विशेषवाचकं पदं तापस इति तत्र विशेषणं जटयोपस्थापितो विषयभोगाऽभावः, विषयभोगाऽभावे

---

1.पा. सूत्र 03/ 03/ 170

विशेषणं जटापदम्, अतः तापसविशेषितविषयभोगाऽभावविशेषणम्, जटा उपलक्षणम्। अथवा विशेष्यस्य साक्षात्सम्बद्धं विशेषणम्, परम्परया सम्बद्धमुपलक्षणम्। यथा दण्डी पुरुषः इत्यत्र पुरुषे साक्षात्दण्डः संयोगसम्बन्धेन विशेषणम्। दण्डनिष्ठदडत्वजातिस्तु दण्डद्वारा पुरुषे विशेषणं भवति, अतः उपलक्षणम्।

मणिकृदनुयायिनस्तु विशेषणोपलक्षणयोः भेद इत्थं प्रतिपादयन्ति। यत्रैकस्याः व्यावृत्तेः अनुयोगिता प्रतियोगिता च एकधर्मावच्छिन्ना तत्र व्यावृत्तेरनुयोगितावच्छेदकत्वेन प्रतियोगितावच्छेदकीभूताऽभावप्रतियोगित्वेन प्रतीयमानत्वं विशेषणपदप्रवृत्तिनिमित्तम्। यथा दण्डी पुरुषः। अयं भावः। यत्र दण्डधारिणः अदण्डधारिणश्च समुदायो वर्तते, तत्र दण्डी पुरुषः इति निश्चयेन दण्डधारिरहितपुरुषाणां व्यावृत्तिर्भवति। एकस्मिन् पुरुषे च दण्डधारित्वनिश्चयः। एवञ्चौकेन पुरुषत्वेन अवच्छिन्ना प्रतियोगिता अनुयोगिता च एकस्याः व्यावृत्तेः तदनुयोगिता दण्डेनाप्यवच्छिद्यते। तत्प्रतियोगितावच्छेदकीभूतदण्डाभावं प्रतियोगित्वञ्च दण्डे प्रतीयते। अतः दण्डी पुरुषः इत्यत्र दण्डः पुरुषविशेषणम्, यत्र तु प्रतियोगित्वानुयोगित्वयोः नैकधर्मावच्छिन्नत्वं तत्र पद्मात्वावच्छेदेन कुसुमसामान्यपत्रादि व्यावृत्तेः प्रत्ययेऽपि कुसुमत्वं न विशेषणं पद्मस्य, किन्तु उपलक्षणम्। अथवा उद्देश्याऽन्वय प्रतियोगी धर्मो विशेषणम्, तदन्यदुपलक्षणम्। यथा काकेन देवदत्तगृहाः इत्यत्र उद्देश्यायाः देवदत्तस्वत्वशून्यगृहव्यावृत्तेरन्वयितावच्छेदकत्वं काकस्य न सम्भवति, अतो न काको विशेषणम्।

इत्थंभूत – इति सूत्रविहिततृतीयार्थविचारः– प्रत्येकस्मिन्नपि कारके विभक्तिविध ायकं नाना सूत्राणि सन्ति। प्रत्येककारकवत् तृतीयाकारकेऽपि नाना सूत्राणि वरीवर्तन्ते। तत्र यद्येकविधः एव तृतीयार्थः स्यात् तदा एकेनैव सूत्रेण सर्वत्र कार्यनिर्वाहसम्भवे तत्तद्सूत्राणां वैय्यर्थापत्तिः, अतो निश्चप्रचमेव प्रत्येकसूत्रेण विधीयमानायाः तृतीयायाः भिन्नः भिन्नः अर्थः। तत्र ''इत्थंभूत लक्षणे'' इति सूत्रेण विधीयमानायाः तृतीयाविभक्तेः कोऽर्थः इति संक्षेपेणोपस्था प्यते। तत्र वैय्याकरणमते ज्ञापकत्वं तृतीयार्थः। यतोहि तन्मते लक्षणं ज्ञानजनकज्ञानविषयत्व रूपं भवति। अतः तापसत्वस्य जटायाः ज्ञापकत्वेन जटापदोत्तरतृतीयायाः ज्ञापकत्वमर्थो भवति। व्युत्पत्तिवादरीत्या लक्षणत्वं नाम विशेष्यवृत्तित्वे सति विशेष्यतावच्छेदक समानाधिकरणाऽभावप्रतियोगित्वरूपम्, अतः प्रतियोगित्वं तृतीयार्थः। अथवा वैशिष्ट्यं तृतीयार्थः। विभक्त्यर्थनिर्णयानुसारेण ज्ञानजन्यज्ञानं तृतीयार्थः। एवं रीत्या प्रायः आचार्य्याणां मते तृतीयायाः अर्थः भिन्नः भिन्नः भवति। अत्रैव केचन आचार्याः सम्बन्धः तृतीयार्थः न भवितुं शक्नोति वैशिष्ट्यं तृतीयार्थः न भवितुं शक्नोति, इत्यादि विषये नाना विचाराः सूत्रेऽस्मिन्नुपस्थापिताः किन्तु विस्तारभिया नाग्रे विचारयामि।

इति शम्

ISSN-0974-8946 शोधप्रभा
जनवरी-मार्च, 2020 वर्ष : 45, प्रथमोऽङ्कः

# श्रीमद्भागवते छन्दोविमर्शः

प्रो. मखलेशकुमारः*

वैदिकसाहित्यस्य परिपोषकं भवति पुराणवाङ्मयमिति निर्विवादतया सर्वे विद्वांसः स्वीकुर्वन्ति। वेदस्योपवृंहणार्थमेव पुराणानां प्राकट्यं कृतं महर्षिणा वेदव्यासेन इत्यपि सत्यम्। चतुर्लक्षश्लोकात्मकमेतावद् विशालं वर्तते पौराणिकं वाङ्मयम्। भगवता वेदव्यासेन समस्तवैदिकज्ञानस्य संग्रहः कृतः पुराणेषु। 'छन्दः पादौ तु वेदस्य' इत्यनेन वचनेन ज्ञायते यत् वेदपुरुषस्य पादौ छन्दः इति। समस्तं वैदिकं वाङ्मयं तथा च वैदिकवाङ्मयस्य परिपोषकानि पुराणानि संस्कृतसाहित्यञ्च छन्दसः उपरि विद्यमानानि सन्ति। अतः छन्दांसि भवन्ति समस्तसंस्कृतसाहित्यस्य आधारस्तम्भाः।

शोधपत्रेऽस्मिन् श्रीमद्भागवतमधिकृत्य छन्दांसि विचारणीयानि। पुराणवाङ्मये श्रीमद्भागवतमहापुराणस्य महत्तमं स्थानं विद्यते। पुराणमेतद् महर्षिः वेदव्यासः सप्तदशपुराणानां रचनानन्तरं, देवर्षेः नारदस्योपदेशेन अकरोत्। वस्तुतः वेदविभाजनपूर्वकं सप्तदशपुराणानां महाभारतस्य च रचनानन्तरमपि महर्षेः आत्मा शान्तिं न प्राप्नोत्। व्यासे शोकमग्ने जाते? तस्याश्रमे देवर्षिः नारदः समागत्य महर्षेः न्यूनतामालोक्य श्रीकृष्णलीलापरिपूर्णं श्रीमद्भागवतं कर्तुमुपदिदेश-

**अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः।**
**उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम्॥**[1]

देवर्षेः उपदेशेन महर्षि समाधौ भगवतः लीलाः अवलोक्य लिपिबद्धाश्चकार। एतावता पुराणेऽस्मिन् अन्येषां पुराणानामपेक्षया भाषा प्राञ्जला, शैली काव्यमयी चालोक्यते।

श्रीमद्भागवतस्य भक्तिशास्त्रत्वेन प्रसिद्धिः विद्यते, परन्तु भक्तिप्रतिपादकं शास्त्रं भूत्वा अपि श्रीमद्भागवतमहापुराणं काव्योचितगुणैः परिपूर्णमस्ति। 'तेने ब्रह्म हृदा च आदिकवये' इति भागवतीयवचनानुसारं ब्रह्मा एव आदिकविः भवति। श्रीमद्भागवतस्य परम्परा नारायणादेव प्रारभ्यते। भगवान् नारायणः चतुःश्लोकीं भागवतं ब्रह्मणे, ब्रह्मा अपि नारदाय, नारदोऽपि व्यासाय, व्यासः स्वपुत्राय शुकदेवाय तथा च शुकदेवो महर्षिः राज्ञे परीक्षिते करुणापूर्वकं प्रदत्तवान्। अतः आदिकवेः ब्रह्मणः परम्परायां समागतेन

---

*आचार्यः(पुराणेतिहासः) राष्ट्रियसंस्कृतविश्वविद्यालयः (मा.वि.)श्रीसदाशिवपरिसरः, पुरी

1. श्रीमद्भागवते -१.५.१३

मुनिना वेदव्यासेन कृतेऽस्मिन् पुराणे रस-छन्दोऽलङ्कार-रीति-वृत्ति-गुणानां च परिपूर्णता विद्यते एव। चत्वारः वेदाः, षड्वेदाङ्गानि, मीमांसा-न्याय-धर्मशास्त्र-पुराणानि इति चतुर्दश विद्यास्थानानि भवन्ति। भागवते प्रायः एताः सर्वाः विद्याः प्रकाशिताः। भागवतस्योपरि विद्यमानाः बहुविधाः टीकाग्रन्थाः अस्य विषयगाम्भीर्यं प्रकाशयन्ति। केनचिद् विदुषा कथितञ्च यत् स्वर्णपरीक्षा अग्नौ, शस्त्रभृतः परीक्षा रणाङ्गणे, गृहिणीपरीक्षा विपत्तौ यथा भवति तथा विदुषः परीक्षा श्रीमद्भागवते भवति। यतो हि सर्वाणि शास्त्राणि श्रीमद्भागवतेऽवश्यमेव प्रतिपादितानि। आभाणकमेतद् श्रीमद्भागवतस्य वैशिष्ट्यं सुप्रकाशयति। तद्यथा-

**धनञ्जये हाटकसम्परीक्षा रणाजिरे शस्त्रभृतां परीक्षा।**
**विपत्तिकाले गृहिणीपरीक्षा विद्यावतां भागवते परीक्षा॥**

काव्येषु रसस्यैव प्राधान्यं भवति। रसास्वादं कोऽपि कथमपि न त्यजति। 'पिबत भागवतं रसमालयं इत्यनेन वचनेन भागवतस्याभिधानं रसत्वेनापि कृतं महर्षिणा वेदव्यासेन श्रीमद्भागवतस्य तृतीये श्लोके। सर्वे जनाः निगमकल्पतरोः फलरूपिणि भागवते विद्यमानं रसं मोक्षमभिव्याप्य पिबन्तु, अर्थात् मोक्षेऽपि श्रीमद्भागवतरसः न त्याज्यः इति सूचितं मुनिना वेदव्यासेन।

देवर्षितः चतुश्लोकीं भागवतं सम्प्राप्य महर्षिः वेदव्यासः अष्टादशसहस्रश्लोकान्वितं श्रीमद्भागवतमहापुराणं रचयामास। द्वादशस्कन्धपरिपूर्णेऽस्मिन् पञ्चत्रिंशदधिक-त्रिशतमध्यायाः विद्यन्ते। प्रायः तत्र सर्वेषु अध्यायेषु छन्दसः परिवर्तनमवलोक्यते। पुराणेऽस्मिन् अनुष्टुप्छन्दसः बहुलतया प्रयोगः सम्प्राप्यते। अनुष्टुप्श्लोकानुसारं गणनाकरणेनैव भागवते श्लोकानां संख्या १८सहस्रं भवितुमर्हति। कथनस्याभिप्रायः यत् 'ग्रन्थो अष्टादशसाहस्रो द्वादशस्कन्धसमन्वितः' इति प्रसिद्धे सत्यपि तत्र अष्टादशसहस्रश्लोकाः न प्राप्यन्ते। अत एव विद्वांसः अनुष्टुप्छन्दोऽनुसारं अन्येषामपि छन्दसां गणनां कृत्वा पुराणेऽस्मिन् १८०००सहस्रमिति संख्यां पूरयन्ति। श्रीमद्भागवते अनुष्टुब्वृत्तमतिरिच्य इन्द्रवज्रा-उपेन्द्रवज्रा-उपजाति-वसन्ततिलका-मालिनी-पुष्पिताग्रा-स्वागता-शिखरिणी-मन्दाक्रान्ता-शार्दूलविक्रीडित-स्रग्धराश्चेत्यादीनां छन्दसां प्रयोगः सम्प्राप्यते। आर्याच्छन्दसः प्रयोगोऽपि अत्र कृतः विद्यते। श्रीमद्भागवते प्रयुक्तानि विविधानि छन्दांसि अस्य काव्यत्वं सम्वर्धयन्ति। भगवान् श्रीकृष्णः स्वयमपि स्वविभूतिप्रख्यापने गीतायां 'गायत्री छन्दसामह' तथैव किञ्चिद् पाठभेदेन श्रीमद्भागवतेऽपि उद्धवगीतायां 'पदानि छन्दसामहम्' इति स्ववचनेन एव छन्दसः महत्त्वं प्रकटितवान्।

वेदमन्त्राणां विशुद्धोच्चारणार्थं लयपूर्वकगानार्थञ्च छन्दःशास्त्रस्योपयोगिता भवति। एतदर्थमेव वेदाङ्गेष्वस्य गणना विद्यते। वेदाङ्गस्यास्य प्रतिनिधित्वं पिङ्गलविरचितं छन्दःसूत्रं करोति। अस्मिन् ग्रन्थेऽष्टौ अध्यायाः विद्यन्ते। प्रायः चतुर्थोऽध्यायस्य सप्तमसूत्रं यावद् वैदिकच्छन्दसां, तदनन्तरमन्तं यावद् लौकिकच्छन्दसां लक्षणं प्रदत्तं

विद्यते। ऋक्प्रातिशाख्ये, कात्यायनकृतच्छन्दानुक्रमण्यामपि छन्दसां विवेचनं वर्तते। पुराणेषु अग्निपुराणे विष्णुधर्मोत्तरे च छन्दसः स्वरूपं वर्णितम्।

छन्दःशब्दस्य व्युत्पत्तिं कुर्वता निरुक्तकारेण कथितं यत् छन्दांसि छादनात् इति। अर्थात् भावानाम् आच्छादनात् एव एतेषां संज्ञा छन्दः इति। यदक्षरपरिमाणं तच्छन्दः अर्थात् यत्र अक्षराणां संख्या निर्धारिता भवति तच्छन्दः, एतादृशं लक्षणं छन्दोनुक्रमण्यां कात्यायनेनापि कृतम्। छन्दयति प्रीणाति रोचते इति छन्दः, छन्दयति आह्लादयति इति छन्दः, छन्द्यन्तेऽनेन वा छन्दः इति बहुविधाव्युत्पत्तयः छन्दसां महत्त्वं प्रकाशयन्ति। गायत्री-उष्णिग्-अनुष्टुप्-बृहती-पंक्ति-सतोबृहती-प्रस्तारपंक्ति-त्रिष्टुप्-जगती-अतिशक्वरीत्यादीनि प्रधानवैदिकच्छन्दोरूपेण प्रसिद्धानि सन्ति। एतेषां छन्दसामवान्तरभेदाः अपि संहितासु अवलोक्यन्ते। वर्णगणनाधारेण एव वैदिकच्छन्दःसु व्यवस्था भवति। श्रीमद्भागवतेऽपि-

**विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः।**
**अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम्॥**
**गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।**
**त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद् विराट्॥**[1]

कालान्तरे वैदिकच्छन्दैः एव लौकिकछन्दांसि प्रायः विकसितानि। एतेषां लौकिकच्छन्दसां विचारः छन्दोमञ्जर्यां वृत्तरत्नाकरे श्रुतबोधे च सम्यक् कृतः। जातिः वृतञ्चेति छन्दः द्विविधं भवति। मात्राछन्दः जातिः कथ्यते। वर्णच्छन्दः वृत्तमिति कथ्यते। मात्राछन्दःसु मात्राणां तथा वर्णच्छन्दःसु अक्षरणां प्रधानता भवति। पुनः वृत्तं त्रिविधं भवति-समवृत्तं, अर्धसमवृत्तं, विषमवृत्तञ्च। आर्या-आर्यागीति-उपगीतीत्यादिमात्राच्छन्दःसु तथा च इन्द्रवज्रा-उपेन्द्रवज्रा-उपजाति-पुष्पिताग्रा-मालिनी-प्रहर्षिणी-शिखरिणी-मन्दाक्रान्ताश्चेत्यादिवर्णच्छन्दसां भेदाः अवलोक्यन्ते।

लौकिकच्छन्दःसु प्रायः प्रधानरूपेण विद्यमानानां छन्दसां प्रयोगः श्रीमद्भागवते अवश्यमेव प्राप्यते। पुराणेषु सर्वत्र अनुष्टुप्छन्दसः वर्णनं बाहुल्येन विद्यते, परन्तु श्रीमद्भागवते अनुष्टुप्छन्दसा सह अन्येषामपि अवलोकनं सुविस्तृतरूपेण जायते।

आर्या- मात्राछन्दः एतद्। अस्य लक्षणं यथा श्रुतबोधे-

**यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।**
**अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या॥**

अर्थात् यस्याः प्रथमे तृतीये च पादे द्वादशमात्राः, द्वितीये अष्टादशमात्राः,चतुर्थे पञ्चदशमात्राश्च स्युः, सा आर्या जातिरिति। श्रीमद्भागवतस्य षष्ठस्कन्धे चित्रकेतुकृतस्तुतौ पञ्चदशश्लोकेषु एषा आर्या प्रयुक्ता। तद्यथा-

**अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता।**
**विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः॥**[2]

---

1. श्रीमद्भागवते -११.२१.४०-४१
2. श्रीमद्भागवते -६.१६.३४

वैतालीयम् मात्राछन्दः एतदपि। अस्य लक्षणं यथा वृत्तरत्नाकरे-

**षड् विषमेऽष्टौ समे कलाः ताश्च समे स्युर्नो निरन्तराः।**
**न समाऽत्र पराश्रिता कलाः वैतालीयेऽन्ते रलौ गुरुः॥**

अर्थात् अस्मिन् छन्दसि प्रथमे तृतीये च पादे षड् मात्राः, द्वितीये चतुर्थे च पादे अष्टौ मात्राः स्युः। मात्रानन्तरं प्रतिपादेषु रगणः लघुः गुरुश्च स्यात्। अत्र विषमपादयोः चतुर्दश मात्राः समपादयोः षोडशमात्राश्चेति विवेकः। दक्षयज्ञे इन्द्रः भगवन्तं शिवमनेन वृत्तेन स्तौति। तद्यथा-

**इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम्।**
**सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः॥[1]**

**अनुष्टुप्छन्दः**- वर्णच्छन्दः एतद्। सम्पूर्णे भागवतेऽस्य प्रयोगः सर्वाधिकतया वर्तते। अष्टाक्षरमिदं वृत्तम्। अस्य पादान्ते यतिः भवति। लक्षणं यथा श्रुतबोधे-

**श्लोके षष्ठगुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥**

अत्र प्रत्येके पादे षष्ठमक्षरं गुरुः पञ्चमञ्च लघुः भवति, तथा च द्वितीयचतुर्थयोः पादयोः सप्तमाक्षरं लघुः, प्रथमतृतीययोः गुरुः स्यात्। एतद् प्रसिद्धमष्टाक्षरं वृत्तम्। अस्मिन् पादान्ते यतिः। तद्यथा-

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥[2]**

**प्रमाणिका**- 'प्रमाणिका जरौ लगौ' अर्थात यस्य पादे पूर्वं जगणरगणौ ततो लघुरेकः ततश्चैको गुरुर्भवति सा प्रमाणिका वृत्तमिति। अस्मिन् वृत्ते अष्टाक्षराणि चतुर्भिः चतुर्भिर्यतिश्च भवति, यया कर्णसुखप्रदमिति। श्रुतबोधे अस्य वृत्तस्य नाम नगस्वरूपिणीति। भगवतः नृसिंहस्य कोपशान्त्यर्थं चारणाः अनेन वृत्तेन भगवन्तं प्रार्थयन्ति। तद्यथा-

**हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः।**
**यदेष साधुहृच्छयस्त्वयासुरः समापितः॥[3]**

**इन्द्रवज्रा**- 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' अर्थात् यत्र पादे तगणद्वयं जगणः ततश्च गुरुद्वयं भवति तदिन्द्रवज्रा नामकं वृत्तं भवति। अत्र पादान्ते यतिः, एकादशाक्षरमिदं वृत्तम्। शुकदेवम्प्रति राज्ञः निवेदने प्रयुक्तं वृत्तमेतद्। तद्यथा-

**वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः।**
**प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन्॥[4]**

**उपेन्द्रवज्रा**- 'उपेन्द्रवज्रा प्रथमे लघौ सा' (छन्दोमञ्जर्याम् ) तथा च वृत्तरत्नाकरे

1. श्रीमद्भागवते-४.७.३२
2. श्रीमद्भागवते -१.२.४
3. श्रीमद्भागवते - ७.८.५१
4. श्रीमद्भागवते -१०.१.७

'उपेन्द्रवज्रा जतजास्ततो गा' अर्थात् यत्र जगणः तगणः पुनश्च जगणः तदनन्तरं द्वौ गुरू यदि स्यातां तदा सा उपेन्द्रवज्रा इति। एकादशाक्षरमिदं वृत्तम्, पादान्ते यतिश्च। दशमस्कन् ब्रह्मा देवगणान् अनेन छन्दसा निर्दिशति। तद्यथा-

**पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम्।**
**स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्तया क्षपयंश्चरेद् भुवि।।[1]**

**उपजातिः**- यत्र इन्द्रवज्रोपेन्द्रवज्रयोः पादाः यथा क्रमेण भवन्ति, अर्थात प्रथमे तृतीये चेन्द्रवज्राा तथा द्वितीये चतुर्थे चोपेन्द्रवज्रा च भवेत्तदुपजातिवृत्तं कथ्यते। देवकीगर्भस्तुतौ ब्रह्मादयः देवाः उपजातिवृत्तेन निवेदयन्ति। तद्यथा-

**त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च।**
**त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये।।[2]**

**शालिनी**- 'मात् तौ गौ चेत् शालिनी वेदलोकैः' अर्थात् मात् मगणात् परं तगणद्वयं गुरुद्वयञ्च यदि स्यात्तदा शालिनी वृत्तं भवति। चतुर्षु सप्तसु च यतिर्भवति। इदमेकादशाक्षरं छन्दः। भागवते देवकीस्तुतौ वृत्तमेतद् प्रयुक्तम्। तद्यथा-

**योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्।**
**निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये।।[3]**

**कनकमञ्जरी/इन्दिरा वा**- श्रीमद्भागवते रासलीलाप्रसङ्गे गोपीगीतं समुपवर्णितम्। गोपीगीते 'राजहंसीछन्दः, ललितमिति केचित्' इति अन्वितार्थटीकायां समुल्लिखितम्। इन्दिरा वा अन्ये विद्वांसः कथयन्ति। 'नररलैर्गुराविन्दिरा मता' इति छन्दोमञ्जर्या प्रक्षिप्ते छन्दसि इन्दिरावृत्तस्य लक्षणं प्रदत्तम्। काश्याः विदुषा राममूर्तिना स्वीयगूढार्थदीपनीटीकायां कनकमञ्जरीति वृत्तं स्वीकुर्वता तस्य लक्षणं 'कनकमञ्जरी नश्चरौ लगा' इति प्रस्तुतम्। अत्र लक्षणद्वयं तुल्यमिति, केवलं नामभेदः अवलोक्यते। परन्तु अन्वितार्थटीकायां राजहंसी उत वा ललितं इति तल्लक्षणं वृत्तरत्नाकरे छन्दोमञ्जर्या श्रुतबोधे वा न लभ्यते। यल्लिखितं तत्तु न संघटते। श्रीमद्भागवते गोपीगीते एकोनविंशतिश्लोकेषु वृत्तमेतत् प्रयुक्तम् । तद्यथा-

**जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि।**
**दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते।।[4]**

**स्वागता**- 'स्वागता रनभगैर्गुरुणा च' अर्थात् रगण-नगण-भगणेभ्यः परं यत्र गुरुद्वयं स्यात् तत्तु स्वागताछन्दः कथ्यते। पादान्ते यतिः एकादशाक्षरं वृत्तञ्चेदम्। भागवते युगलगीते चतुर्विंशतिश्लोकेषु स्वागतावृत्तमेव प्रयुक्तम्। तद्यथा-

**वामबाहुकृतवामकपोलो वल्गितभ्रूधरार्पितवेणुम्।**
**कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः।।[5]**

---

1. श्रीमद्भागवते-१०.१.२२
2. श्रीमद्भागवते-१०.२.२८
3. श्रीमद्भागवते-१०-३.२६
4. श्रीमद्भागवते-१०.३१.१
5. श्रीमद्भागवते-१०-३५.२

**वंशस्थम्**–'जतौ तु वंशस्थमुदीरितं जरौ' अर्थात् यस्य वृत्तस्य चरणेषु जगण–तगण–जगण–रगणाः क्रमशः स्युः, तद् द्वादशाक्षरं वंशस्थं छन्दः। अस्य पादान्ते यतिः। वंशस्थविलं वंशस्तनितमिति एतस्यापरं नाम विद्यते। मृद्भक्षणलीलायां यशोदामुखेन वृत्तमेतद् प्रस्तुतं भागवतकारेण। तद्यथा–

**अहं ममासौ पतिरेष मे सुता व्रजेश्वरस्याखिलवित्तपा सती।**
**गोप्यश्च गोपाः सहगोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः।।**[1]

**इन्द्रवंशा**–'तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ' अर्थात् वंशस्थलक्षणे यदि प्रथमाक्षरं दीर्घं स्याद्, वा तगणद्वयं जगणः रगणश्च यदि स्यात्तदा इन्द्रवंशा छन्दः भवति। पादान्ते यतिपूर्वकं द्वादशाक्षरवृत्तम्। पूतनावधप्रसङ्गे एतच्छन्दः प्रयुक्तम्। तद्यथा–

**सा मुञ्च मुञ्चालमिति प्रभाषिणी निष्पीड्यमानाखिलजीवमर्मणि।**
**विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह।।**[2]

**द्रुतविलम्बितम्**– 'द्रुतविलम्बितमाह नभौ भरौ' अर्थात् यस्मिन् नगणः भगणद्वयं रगणश्च स्यात्तत्तु द्रुतविलम्बितनामच्छन्दः। अस्मिन् द्वादशाक्षराणि, पादान्ते यतिश्च भवति। भागवतस्य तृतीये श्लोके वृत्तमेतद् प्राप्यते। तद्यथा–

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः।।**[3]

**भुजङ्गप्रयातम्**– 'भुजङ्गप्रयातं चतुर्भिर्यकारैः' अर्थात यस्मिन् वृत्ते यगणचतुष्टयं भवति तद् भुजङ्गप्रयातवृत्तमिति । अस्मिन् पादान्ते यतिः द्वादशाक्षराणि च भवन्ति। दक्षयज्ञे सिद्धाः भगवन्तं शिवमनेन वृत्तेन स्तुवन्ति। तद्यथा–

**अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः।**
**तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः।।**[4]

**स्रग्विणी**– 'रैश्चतुर्भिर्युता स्रग्विणी संगता' अर्थात यत्र चतुर्षु चरणेषु चत्वारो रगणाः भवेयुः तद् स्रग्विणी नाम वृत्तमिति। अस्मिन् द्वादशाक्षराणि, पादान्ते यतिश्च भवति। दक्षयज्ञसम्पूर्तिसमये ब्रह्माणाः अनेन छन्दसा भगवन्तं शिवं प्रार्थयन्ति। तद्यथा–

**त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च।**
**त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः।।**[5]

**वीरासिका**– अस्य वृत्तस्य लक्षणं वृत्तरत्नाकरे छन्दोमञ्जर्यां श्रुतबोधे छन्दः संग्रहे च न प्राप्यते। परन्तु दक्षयज्ञपूर्तिसमये योगेश्वरैः स्वस्तुतौ प्रयुक्ते श्लोके वीरासिकाछन्दः इति गूढार्थदीपिनीटीकाकाराः स्वटीकायां लिखन्ति। तद्यथा–

1. श्रीमद्भागवते–१०.८.४२
2. श्रीमद्भागवते–१०.६.११
3. श्रीमद्भागवते– १.१.३
4. श्रीमद्भागवते–४.७.३५
5. श्रीमद्भागवते–4.7.45

**प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः।**
**अथापि भक्त्येशतयोपधावतामनन्यवृत्त्यानुगृहाण वत्सल॥**[1]

**पुष्पिताग्रा**- वृत्तस्यास्य लक्षणं यथा छन्दोमञ्जर्याम्-

**अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा।**

यस्य छन्दसः विषमे पादे प्रथमे तृतीये च नगणद्वयं रगणः यगणश्च स्यात्तथा समे द्वितीये चतुर्थे च पादे नगणः जगणद्वयं रगणः गुरुश्च स्यात्सा पुष्पिताग्रा इति। अस्मिन् छन्दसि प्रथमे तृतीये द्वादशाक्षराणि द्वितीये चतुर्थे च त्रयोदशाक्षराणि भवन्ति। श्रीमद्भागवते प्रथमे स्कन्धे विद्यमाना भीष्मकृता श्रीकृष्णस्तुतिः अस्मिन् छन्दसि निबद्धा इति। अस्यां स्तुतौ एकादशश्लोकाः सन्ति। तद्यथा-

**स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः।**
**धृतरथचरणोऽभ्ययाच्चलदगुर्हरिरिव हन्तुमिभं गतोत्तरीयः॥**[2]

**मत्तमयूरम्**- 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' अर्थात् यत्र मगण-तगण-यगण-सगणः गुरुश्च भवेत्तत्तु मत्तमयूरवृत्तम्। अस्मिन् चतुर्भिः नवाक्षरैश्च यतिर्भवति, त्रयोदशाक्षरवृत्तमिदम्। दक्षयज्ञसम्पूर्त्तौ गन्धर्वाः अनेन छन्दसा भगवन्तं शिवं प्रार्थयन्ति। तद्यथा-

**अंशांशास्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः।**
**क्रीडाभाण्डं विश्वमिदं यस्य विभूमन् तस्मै नित्यं नाथ नमस्ते करवाम॥**[3]

**प्रहर्षिणी**- 'त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम' अर्थात यत्र मनजरगाः मगण-नगण-जगण-रगणः गुरुश्च स्यात्तथा त्रिभिः दशभिश्च विरतिर्भवेत्, तद् प्रहर्षिणीनामकं वृत्तम्। त्रयोदशाक्षरवृत्तमिदम्। दक्षयज्ञभङ्गान्ते याज्ञिकानां पत्न्यः भगवन्तं शिवमनेन वृत्तेन स्तुवन्त्यः कथयन्ति। तद्यथा-

**यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाद्य दक्षकोपात्।**
**तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन्नलिनरुचा दृशा पुनीहि॥**[4]

**रूचिरा**- 'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः' अर्थात् यस्य चतुर्षु चरणेषु जगण-भगण-सगण-जगणाः गुरुश्च स्यात्तत् रुचिराछन्दः। अस्मिन् त्रयोदशाक्षराणि चतुर्भिः नवभिश्च यतिर्भवति। वृत्तरत्नाकरे तु 'चतुग्रहैरतिरुचिरा जभस्जगाः' इति लक्षणमुक्त्वा अतिरुचिरा इति नामान्तरं कथितम्। दक्षयज्ञसम्पूर्तिसमये ऋषयः अनेन छन्दसा भगवन्तं शिवं प्रार्थयन्ति इत्युक्तं भागवतस्य गूढार्थदीपिनीटीकायाम्। अन्वितार्थप्रकाशिकायां तु प्रथमपादे वंशस्थं तथा च पादत्रये प्रभावतीछन्दः कथितं तत्तु न संघटते इति। तद्यथा-

---

1. श्रीमद्भागवते-४.७.३८
2. श्रीमद्भागवते-१.९.३७
3. श्रीमद्भागवते-४.७.४३
4. श्रीमद्भागवते-4.7.33

**अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे।**
**विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवान्।।[1]**

**मञ्जुभाषिणी**- 'सजसा जगौ च यदि मञ्जुभाषिणी' अर्थात् यत्र प्रतिचरणेषु सगणः जगणः सगणः जगणः गुरुश्च भवेत्तत् मञ्जुभाषिणी इत्युच्यते। त्रयोदशाक्षरवृत्तमिदम्। अस्मिन् पञ्चभिः अष्टभिश्च विरतिः। पादान्ते विरतिः स्यादिति केचिदामनन्ति। अस्मिन् छन्दसि बहुमाधुर्य प्राप्यते, येन वृत्तमिदं मञ्जुभाषिणीति नाम्ना व्यवह्रियते। 'सुनन्दिनी' इति नामभेदः ग्रन्थान्तरे प्रसिद्धः इत्यपि कथितं छन्दोमञ्जर्याम्। नृसिंहस्तुतौ मनवः अनेन छन्दसा भगवन्तं स्तुवन्तः नमन्ति। तद्यथा-

**मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः।**
**भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान्।।[2]**

**वसन्ततिलका**- 'उक्ता वसन्ततिलका तभजा जगौ गः' अर्थात् यत्र चरणेषु तगणः भगणः जगणद्वयं गुरुद्वयञ्च स्यात्तदा वसन्ततिलका नाम छन्दः। चतुर्दशाक्षरवृत्तं पादान्ते यतिश्च। श्रीमद्भागवते विविधासु स्तुतिषु अस्य प्रयोगः अवलोक्यते। वेणुगीतमपि अनेन वृत्तेन वर्णितम्। उदाहरणमेकं नलकूबरमणिग्रीवस्तुतौ। तद्यथा-

**वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः।**
**स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्।।[3]**

**मालिनी**- 'ननमयययुतेयं मालिनी भोगिलोकैः' अर्थात् यस्मिन् वृत्ते नगणद्वयं मगणः यगणद्वयञ्च स्यात् तद् मालिनीवृत्तं कथ्यते। पञ्चदशाक्षरं वृत्तमिदम्। अस्मिन् छन्दसि अष्टाभिः सप्तभिश्च विरतिः भवति। भागवते अस्य प्रयोगः प्राप्यते। भ्रमरगीतं तु मालिनी वृत्तेन वर्णितम्। उदाहरणं यथा-

**मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्।**
**बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवद् यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः।।[4]**

**शिखरिणी**- 'रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी' अर्थात् यत्र यगण-मगण-नगण-सगण-भगणाः लघुरेकः गुरुरेकश्च स्यात्तद् शिखरिणीवृत्तमिति। सप्तदशाक्षरवृतमिदम्। षड्भिः एकादशभिश्च एषा यतिमती भवति। दक्षयज्ञसम्पूर्त्तौ देवाः अनेन वृत्तेन निवेदयन्ति। तद्यथा-

**पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने।**
**पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः।।[5]**

अन्यच्च ब्रह्मणः मोहप्रसङ्गे-

1. श्रीमद्भागवते-4.7.34
2. श्रीमद्भागवते-७.८.४८
3. श्रीमद्भागवते-१०.१०.३८
4. श्रीमद्भागवते-१०.४७.१७
5. श्रीमद्भागवते-४.७.४२

**इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ।**
**अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम्॥**[1]

**मन्दाक्रान्ता**–'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' अर्थात् यत्र मगणः भगणः नगणः त गुरुद्वयञ्च भवति तद् मन्दाक्रान्ता वृत्तम्। सप्तदशाक्षरं छन्दः, चतुर्भिः षड्भिः सप्तभिश्च यतिः स्यात्। दक्षयज्ञे सदस्याः, नरसिंहस्तुतौ इन्द्रश्चानेन छन्दसा एव भगवन्तं स्तुवन्ति। दशमस्कन्धीयमुदाहरणं यथा-

**क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं, पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः।**
**रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च, स्विन्नं वक्तं कबरविगलन्मालती निर्ममन्थ॥**[2]

**नर्कुर्टकम्**- 'हयदशभिर्नजौ भजजला गुरु नर्कुटकम्' इति वृत्तरत्नाकरे छन्दसोऽस्य लक्षणं लक्षितम्। यत्र प्रतिचरणे नगणः जगणः भगणः जगणौ लघुः गुरुश्च वर्णः स्यात्तद् वृत्तं नर्कुर्टकं नाम। अस्मिन् सप्तभिः दशभिश्च विरतिः। सप्तदशाक्षरवृत्तमिदम्। नर्दटकं मर्दटकं वा अस्य नामान्तरम्। श्रीमद्भागवते वेदस्तुतिः अस्मिन् छन्दसि वर्तते। तद्यथा-

**जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः।**
**अगजगदोकसामखिलशक्त्यवबोधक ते कवचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः॥**[3]

**शार्दूलविक्रीडितम्**- 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' यत्र चरणेषु क्रमशः मगण-सगण-जगण-सगण-तगण-तगणाः ततश्चैको गुरुर्भवति तत्तु शार्दूलविक्रीडितं वृत्तम्। एकोनविंशत्यक्षरं छन्दः, अस्मिन् द्वादशभिः सप्तभिश्च विरामः स्यात्। श्रीमद्भागवते स्थाने-स्थाने अस्य छन्दसः प्रयोगः कृतः मुनिना व्यासेन। भागवतस्य प्रथमस्कन्धे आदिमं श्लोकद्वयं द्वादशे त्रयोदशेऽध्याये स्कन्धे श्लोकचतुष्टयमेवमन्यत्रापि अस्य प्रयोगः प्राप्यते। द्वादशे स्कन्धेसूतः भगवन्तं अनेन वृत्तेन स्तौति। तद्यथा-

**यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-**
**र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।**
**ध्यानावस्थिततर्ततेन मनसा पश्यन्ति यं योगिनो**
**यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥**[4]

**स्रग्धरा**- 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' अर्थात मगण-रगण-भगण-नगणैः पुनश्च यगणत्रयेण युतं 'स्रग्धरा' नाम वृत्तं कथ्यते। एषा स्रग्धरा सप्तभिः, सप्तभिः, सप्तभिश्च विरामवती भवति। एकविंशत्यक्षरं छन्दः। श्रीकृष्णावतारमहत्त्वं शुकदेवः अनेन छन्दसा प्रस्तौति। तद्यथा -

---

1. श्रीमद्भावगे- 10.3.57
1. श्रीमद्भागवते-१०.१३.५७
2. श्रीमद्भागवते-१०.९.३
3. श्रीमद्भागवते-१०.८७.१४
4. श्रीमद्भागवते-१२.१३.१

**तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं,**
**विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः।**
**यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः,**
**कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य॥[1]**

अन्यत्र रामावतारवैशिष्ट्यं स्रग्धरावृत्तेन एव वर्णितम्। तद्यथा-

**गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः**
**पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम्।**
**वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ-**
**त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः॥[2]**

श्रीमद्भागवतमहापुराणं विद्यते भक्तिप्रधानम्। परन्तु भक्तिप्रधाने सत्यपि अस्मिन् सर्वविधविद्यानां, सर्वेषां दार्शनिकसिद्धान्तानाञ्च वर्णनमवश्यमेव वर्तते। अस्मिन् काव्यशास्त्रस्यापि सर्वत्र श्लोके-श्लोके दर्शनमवलोक्यते। श्रीमद्भागवतस्य छन्दांसि अवलम्ब्य मया अस्मिन् शोधपत्रे विचारितम्। प्रायः श्रीमद्भागवते अनुष्टुप्छन्दसः सर्वाधिकप्रयोगः वर्तते। ततः इन्द्रवज्रा-उपेन्द्रवज्रा-उपजाति-वसन्ततिलकाश्चेत्यादीनां स्तुत्यादिषु बहुधा प्रयोगः प्राप्यते। इतः परमन्येषां बहूनां छन्दसां प्रयोगोऽपि मुनिना अत्र कृतः। पुराणेऽस्मिन् छन्दोभङ्गः अपि प्राप्यते, परन्तु आर्षप्रयोगत्वात् तत्तु सोढव्यम् एव।

श्रीमद्भागवते भीष्मस्तुतौ, चित्रकेतुस्तुतौ, वेणु-गोपी-युगल-भ्रमरगीतादिषु वेदस्तुतौ च छन्दसः वैशिष्ट्यमवलोक्यते, तथा च स्थानद्वये, दक्षयज्ञसम्पूर्तिकाले, भगवतः नृसिंहस्य कोपशान्त्यर्थं ब्रह्मादिभिः देवैः कृतस्तुतौ प्रायः पृथक्-पृथक् छन्दसां प्रयोगः कृतः। दक्षयज्ञप्रसङ्गे, हिरण्यकशिपुवधप्रसङ्गे च शिवनृसिंहयोः महान् कोपः संजातः। तत्र यदा एकस्य स्तुत्या भगवतः प्रसन्नता न जायते तदा अन्यः कश्चिद् भिन्नं छन्दोऽवलम्ब्य स्तौति। अनेन ज्ञायते यत् भगवतः प्रीत्यर्थं छन्दसां बहु महत्त्वमस्ति अत एव श्रीमद्भागवते प्रयुक्तानां छन्दसां भागवतीयमुदाहरणं प्रस्तूय दिङ्मात्रमालोचितमिति शम्।

---

1. श्रीमद्भागवते-10.90.47
2. श्रीमद्भागवते-९.१०.४

UGC - CARE Listed **शोधप्रभा**
**जनवरी-मार्च, 2020** वर्ष : 45, प्रथमोऽङ्कः

# आचार्याभिनवगुप्तस्य काव्यशास्त्रीयसिद्धान्तानां शास्त्रीयसन्दर्भाः

**श्रीरमेशचन्द्रनैलवालः***

आचार्याभिनवगुप्तः कश्मीरी दार्शनिकः, रहस्यवेत्ता, काव्यशास्त्री सौन्दर्यशास्त्री च वर्तते। अनेन यस्मिन् कस्मिन्नपि शास्त्रे यत्किमपि उक्तं तत्सर्वमद्यावधि प्रमाणरूपेण सर्वैस्स्वीक्रियते। एते समन्वयवादीनः आचार्याः, अनेन स्वग्रन्थेषु नवशताचार्याणां मतानि उल्लिखितानि। अतः अनेन काव्यशास्त्रे विविधशास्त्रेभ्यः चिन्तनपुरस्सरमेव स्वसिद्धान्ताः स्थापिताः।

पत्रस्य विषयोऽयं कथं प्रासङ्गिकमिति विचार्यते चेत् तदैतत् ज्ञातव्यं महत्त्वपूर्णं यत्कथमभिनवगुप्तस्य सिद्धान्ता अद्यावधि प्रमाणयुक्ताः, यतो हि एकस्मिन्विषये विविधाचार्यैः स्वमतानि प्रदत्तानि, रसव्याख्यायाः एव चतस्रः व्याख्याः प्राप्यन्ते, नैकाश्चाप्राप्ताः। तत्राप्यभिनवगुप्तस्यैव व्याख्या प्रसिद्धा दोषरहिता च कथमिति विचारणीयम्? एवमेव विविधसिद्धान्तेष्वप्यस्य सिद्धान्ताः प्रमाणयुक्ताः वर्तन्ते। ज्ञायते यत्- प्रामाण्यमेव कस्यापि शास्त्रस्य सिद्धान्तस्य साहित्यस्य वा सिद्धिर्नास्ति, अपितु तस्य लोकप्रामाण्यमप्यावश्यकमेव। यथा सर्वप्रथमं नाट्यशास्त्रस्य प्रणयनावसरे चतुर्वेदेभ्यः विविधसिद्धान्ताः स्वीकृत्यापि नाट्यसिद्धिर्न जाता। एवमेव भट्टनायक-भट्टलोल्लट-शङ्क्वादीनामपि रससिद्धान्ताः विविधप्रामाणिकदर्शनेभ्यः युक्ताः अपि लोकानुभवे न प्रामाणिकाः। शैवदर्शनाधारिता रसव्याख्या सहृदयस्यानुभूतिसमर्थिता, अत एव प्रामाण्ययुक्ता, एवमेव साहित्यविधा पृथक्विधारूपे स्वीकृता, तथा साहित्यमपि मिश्रितसाधनेभ्यः किञ्चिदन्यदप्यस्तीत्यभिनवगुप्तस्य सिद्धान्तानामन्वेषणेन ज्ञायते। महिमभट्ट-मुकुलभट्ट-शङ्कु-भट्टलोल्लट-भट्टनायकादीनां सिद्धान्ताः न तावत् प्रसिद्धाः प्रामाणिकाः वा जाता, यतो हि लोके तत्सिद्धान्तयुक्तानि प्रमाणानि न प्राप्यन्ते। शैवदर्शनं न केवलं पारमार्थिकस्तरे सत्, अपितु व्यवहारिकेऽपि।

अभिनवगुप्तेन स्वकाव्यशास्त्रीयग्रन्थेषु वेद-आगम-शास्त्र-दर्शन-लोकानुभव-स्वानुभवादिविविधस्रोतेभ्यः स्वसिद्धान्ताः प्रमाणीकृताः। शैवाचार्यत्वेन शैवदर्शनप्रतिपादितसिद्धान्तानां प्रभावाधिकं परिलक्ष्यते, परं विविधस्थले लोकानुभवस्य स्वानुभवस्य चापि प्रामाण्यं स्वीकृतम्। तथैव नियति-प्रतिभा-उल्लास-समावेश-

* शोधछात्रः, संस्कृतविभागः जवाहरलालनेहरुविश्वविद्यालयः नवदेहली

उन्मेष-स्पन्द-चमत्कार-कला-स्पन्द-भोग-अपूर्व-प्रत्यभिज्ञा-चर्वणा-रसना-प्रमातृ-सहृदय-आनन्द-वासना-चमत्कार-विमर्शादिशब्दाः काव्यसिद्धान्तानामवबोधाय शैवदर्शनेभ्यः योजिताः। कविरयं ध्वन्यालोकमङ्गलाचरणे अन्यत्र च पारिभाषिकशब्दमाध्यमेन कवेः काव्यवैशिष्ट्यप्रतिपादनं शैवदर्शनदृष्ट्यैव प्रदर्शयति, येन न केवलं काव्यवैशिष्ट्यमेव प्रतिपाद्यतेऽपितु पाश्चात्यकाव्येभ्योऽपि भारतीयकाव्यानां महत्त्वं दरीदृश्यते।

**रसव्याख्या स्वातन्त्र्यवादः आभासवादः सहृदयसिद्धान्तश्च** - भरतरससूत्रस्य चतुर्षु व्याख्याकारेष्वभिनवगुप्तपादः चतुर्थः, अस्य व्याख्याऽभिव्यक्तिवादनाम्ना प्रसिद्धाः। व्यञ्जनाश्रितः सिद्धान्तस्यास्योद्भावकाचार्यः यद्यप्यानन्दवर्धनः, तथाप्यं सिद्धान्तोऽभिनवगुप्तेन पल्लवितः। अनेन समन्वितमार्गस्यानुसरणपूर्वकं पूवार्चार्याणां समन्वययुक्ता नूतना सुदृढ़साहित्यिकपद्धतिः विकसिता। शैवदर्शनस्य आभासवादाधारेणैव विभावादीनां साजारणीकरणं सम्भवति। आभासवादाऽऽधारेणाऽमिश्रः प्रत्येकमाभासः देशकालाऽनालिङ्गितं सामान्यमेव, मिश्रीभावेन विशेषो भवति। मानवः स्वदृष्टिभेदेन तं विशेषमेव पश्यति। सहृदयं सामाजिकमपि निर्विशेषस्यानुभूतिप्रक्रियायां यदाभासः भवति, सः देशकालानालिङ्गितेनैव भवति। शैवदर्शने मलस्य तारतम्येन क्रमशः सप्तविधप्रमाताः स्वीक्रियन्ते।[1]

अभिनवगुप्तेन रसव्याख्याप्रसङ्गे सप्तरसविघ्नानां चर्चा विहिता। मलानां निवृत्तिपूर्वकमेव प्रमाता विशुद्धचैतन्यस्वरूपं ज्ञात्वा शिवरूपं भवति, तथैव प्रमातुः रसानुभूतिरपि निर्विघ्नावस्थायां सिध्यति। तदेव सहृदयसामाजिकोऽपि विगलितवेद्यान्तरो भूत्वा विभावादिभिरुद्भुतरत्यादियुक्तं आत्मानमनुभवति। सहृदयपरिभाषाप्रत्यभिज्ञासम्मतैव। सहृदयः स्वकल्पनाशक्त्या युक्तो भूत्वा शुद्धरसानुभवसानन्दस्याधिकारी भवति।[2] सः काव्यस्य शास्त्रस्य चाध्ययनेन स्वहृदयेन सह संवादस्य शुद्धसामर्थ्यं प्राप्य, प्रस्तुतविषयेन सह स्वतादात्म्यस्थाप्य गुणयुक्तो भवति।[3]

**ध्वनिः** - यद्यपि ध्वनिसम्प्रदायस्य प्रतिष्ठापकः आनन्दवर्धनः, परं सम्प्रदायस्य पल्लवनमभिनवगुप्तेनैव विहितम्। ध्वनेः स्थापनावसरेऽभिनवगुप्तेन तत्रादरपूर्वकं भर्तृहरेः वाक्यपदीयस्य कारिकाः उद्धृताः।[4] एवमेव ध्वन्यालोकलोचने तेन प्रत्येकस्मिन्नुद्योते वाचः चतुर्स्तराणां चर्चा विहिता। तेन प्रत्युद्योते वाचः स्तुतिः विहिता, तस्येयं स्तुतिः प्रसङ्गानुरूपैव। प्रथमोद्योते ध्वनिस्वरूपविवेचने परावाचः स्तूयते। अत्र व्यज्यते यत् कवेः या प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा, सा नित्यरूपेण स्वकवौ तिष्ठति, यथा पराशक्तिः विश्वनिर्माणे क्षमा, तथैव सा प्रतिभारूपी कवेः शक्तिरपि नूतनं विश्वमुत्सृजितुं योग्या।[5]

1. शिवादिसकलान्तश्च शक्तिमन्तः सप्तः। ई.प्र.वि., भा. २
2. अधिकारी चात्र विमलप्रतिभानशालिहृदयः। अभिनवभारती, पृ० ४७०
3. येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता---। ध्व.लो., पृ. ४०
4. यः संयोगवियोगाभ्यां करणैरुपजन्यते। स स्फोटः शब्दजाश्शब्दा--- तत्रैव, पृ. १४०-१४१
5. यदुन्मीलनशक्त्यैव विश्वमुन्मीलयति क्षणात्। स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां--- ध्व.लो., पृ० १७२

द्वितीये पश्यन्त्याः तृतीय मध्यमायाः, अन्तिमे च वैखरीवाचः स्तुतिः विहिता। अत्राभिनवेन ध्वनेः सङ्कल्पना वाचः चतुर्प्रकारवद्विहिता।

**संविच्छब्दः** – अभिनवभारत्यां रसस्य साक्षात्कारात्मकप्रतीतिसन्दर्भे संविच्छब्दस्य प्रयोगः सर्वप्रथममुपलभ्यते।[1] रसानुभूतौ रसविघ्नप्रसङ्गे संविच्छब्दस्य बहुधा प्रयोगः विहितः। त्रिकदर्शने संविद्-शब्दस्य प्रयोगः मोक्षार्थे वर्तते। सः विशुद्धविषयीगतः, बाह्यप्रकाशेन नास्य प्रकाशः सम्भवति, न कस्यापि प्रमाणेन। त्रिकदर्शने संविद्शब्दः अनेकरूपे प्रयुङ्क्ते। तत्त्वतः संविदः परासंविद्रूपः, शिवाभिन्नञ्च। शैवदर्शने संविद्विश्रान्तिरेव आनन्दस्य मूलम्। तत्र संविदः अनेकाः भूमयः, शुद्धप्रकाशः परासंविद्रूपः, विश्वस्यास्य स्थूलरूपोऽपि नास्ति संविद्भिन्नः।[2]

**भोगशब्दः** – आचार्येणाभिनवगुप्तेन यथा रसाध्यायस्य प्रारम्भे उक्तं तस्य परिपालनं तस्य सिद्धान्तेष्वप्युपलक्ष्यते। तेन भट्टलोल्लटस्य भोगवादं स्वीकृत्य तत्र द्विधा परिष्कारं विहितम्। प्रथमं तु भावकत्वव्यापारस्य भोजकत्वव्यापारस्य चास्वीकृतिः, तथा व्यञ्जनाशक्त्या एव अनयोः शक्त्योः कार्यं सम्पादितम्। द्वितीयञ्च रसभोगस्याश्रयं व्यष्टिचेतनस्य परिसीमितचितिरूपमपरिच्छिद्य समष्टिचेतनस्य व्यवहारे प्रतिपादितम् अर्थात् रसानुभवावस्थायामास्वादकः व्यष्टिरूपं परित्यज्य समष्टिरूपं प्राप्नोति। अभिनवमते भोगः प्रतीतिरूपः[3], अतो यावन्तः रसाः तावन्तः भोगीकरणरूपस्यास्वादनप्रकाराः। प्रायः सकल विघ्नविनिर्मुक्ता संवित्तिरेव भोगः, स्पन्दयुक्तस्य प्रमातुः क्रिया एव चमत्कारः, तस्यैव भोगावेश इत्यपर नाम ।

**चमत्कारः** – अभिनवगुप्तेन रसस्वरूपविमर्शावसरे रसानुभूत्यावसरे च शैवदर्शनस्य चमत्कारशब्दः विशेषतया प्रयुक्तः। अभिनवभारत्यां चमत्कारशब्दस्य विविधाः परिभाषाः सन्ति। सर्वप्रथमं विघ्नरहिता प्रतीतिः चमत्कारशब्देन गृह्यते। तेन सहोत्पन्नाः कम्परोमाञ्चादयो विकारा अपि चमत्कारशब्देन कथ्यन्ते। तदनन्तरं यदा भोगात्मकव्यापारेण युक्तं मनः चमत्कृतो भूत्वा चमत्कारः कथ्यते। चमत्कारशब्दाय स्मृति-सङ्कल्प-मानस-अध्यवसायादयः शब्दा उपयुज्यन्ते।

**आनन्दः, प्रकाशः, एकघनश्च**- अभिनवगुप्तेन सर्वेषां रसानामानन्दरूपता स्वीकृता, आनन्दरूपत्वादेव सर्वे रसाः सुखप्रधानाः। तत्रैव रसाय 'प्रकाशशब्दस्य' 'एकघनशब्दस्य' च प्रयोगः प्राप्यते। अभिनवमते रसानुभवः आत्मानन्दः परमानन्दश्चास्ति। शैवदर्शने सिंविद्विश्रान्तिरेवानन्दस्य मूलमिति स्वीकुर्वन् अस्य त्रिप्रकारेषु वैषयिकाऽऽनन्दे, काव्यानन्दे ब्रह्मानन्दे च भेदः स्पष्टतयाऽऽचार्यैः प्रतिपादितः। वैषयिकाऽऽनन्देऽऽत्मपरामर्शस्य विषयेषु व्यवधानो भवति, काव्यानन्दे विषयाणां साक्षाद्-व्यवधानन्तु न भवति, तथाप्यस्मिन्

---

1. संवेदनाख्य व्यङ्ग्यपरसंवित्ति गोचरः। अभिनवभारती भा. १, पृ० २७७
2. तद्भूमिका सर्वदर्शनस्थितयः। प्रत्यभिज्ञाहृदयम् ८
3. प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोगः इति न विद्मः । अभि.भा.. भा. १, पृ० २७७

संस्काराणामनुवेधस्तु भवत्येव। परं ब्रह्मानन्दन्तु सर्वाऽवस्थासु परमं शुद्धसंवेदनरूपञ्च भवति। **चर्वणा, आस्वादन रसना च** - चर्वणायाः प्रसङ्गेऽलौकिकविभावादयो व्यापाराः प्रमुखाः कथिताः। तन्मते रसचर्वणा पानकरसवत् समष्टिरूपा। चर्वणायाः उत्पत्तिवशात् रसः औपचारित्वेन कार्योऽपि। रसस्य सविकल्पकतायाः निषेधोऽपि चर्व्यमाणतावशात् क्रियते। अनेन प्रकारेण रसस्यार्थेऽऽस्वादनशब्दस्य प्रयोगं कुर्वन्ननुभवभूतः रसः काव्यस्य प्रयोजनमुच्यते। तथा रसास्वादरूपप्रतीतौ निर्विघ्नेन रत्यादीनां भानं भवति। यथा पानकद्रव्या-णामास्वादने गुडमरीचादीनामास्वादनं भिन्नं भिन्नं न भवति, अपितु ऐकरूप्यमेव। तथैव रसानुभवोऽपि व्यक्तिगतानुभवेन विलक्षण एव। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्या-मभिनवगुप्तेन रसनाचर्वणादिशब्दानां पर्यायत्वेन निर्विघ्नास्वादमेव रसशब्देन कथितम्।[1]

**प्रमाता** - काव्यप्रकाशकारेण मम्मटेनाभिनवगुप्तस्याभिव्यक्तिवादस्य निरूपणावसरे 'प्रमातुः' प्रयोगं कुर्वन् उक्तं यत् - स्थायीभावाः प्रमातुः हृदि सर्वदा विद्यमानाः भवन्ति, परं नाट्यादीनां साधारणोपायबलात् परिसीमितः प्रमातृभावं नश्यते, अन्यज्ञेयवस्तूनि सम्पर्कशून्यः प्रमाताऽसीमितप्रमाता कथ्यते, तदैव सहृदयेषु रसानुभवो भवति। शैवमते व्यक्तिरूपः प्रमाता शास्त्रीयशब्दे पशुशब्देन गृह्यते। प्रमातुः मूलस्वभावं माययाऽऽवृत्तो भवति, यदा प्रमाता परिमितप्रमातुः सङ्कुचितकलायाश्च भेदज्ञानं करोति, तदैव व्यक्तिप्रमाता मायालोकस्यातिक्रमणं विधाय कर्मबन्धनेभ्यः मोक्षं प्राप्नोति।

**प्रतिभा** - अभिनवगुप्तेन काव्यार्थज्ञानस्याधिकारी निर्मलप्रतिभानशाली सहृदयः कथितः।[2] स्मृतिशब्दस्य कथनावसरे न्यायदर्शने कथितस्य 'ज्ञातविषयं ज्ञानं स्मृतिः' अस्माद्भिन्नत्वेन साक्षात्कारात्मकस्वरूपा स्मृतिरेव प्रतिभानस्यापरपर्यायः कथितः।[3] अत अभिनवगुप्तमते काव्यानां काव्याशास्त्राणां लेखनेऽवबोधने च वेद-आगम-दर्शन-लोकपरम्परा-स्वानुभव -विविधविषयाणां सामञ्जस्यपूर्णज्ञानम् आवश्यकमेव। प्रायः भारतीयकाव्यदृष्टिस्तु एतादृशी एव, यस्मिन् विविधशास्त्राणां समन्वयः प्राप्यते।

**सन्दर्भग्रन्थसूची -**

आनन्दवर्धनः. ध्वन्यालोकः. वाराणसी : चौखम्बाविद्याभवन, २०११.
अभिनवगुप्तः. ईश्वरप्रत्यभिज्ञाविमर्शिनी. मोतीलालबनारसीदासः, १९८६.
भरतमुनि. नाट्यशास्त्रम्. दिल्ली : परिमलपब्लिकेशन्सः, २००२.
मम्मटः. काव्य प्रकाशः. वाराणसी : चौखम्बासुरभारतीप्रकाशनम्, २००३.

1. तत्र वीतविघ्नात्वादेव असौ रसना चर्वणा निर्वृतिः प्रतीति प्रमातृताविश्रान्तिरेव। तत्रैव, पृ० २८५
2. अधिकारी चात्र विमलप्रतिभानशालिहृदयः। अभि.भा., भा. १. पृ० २७९
3. प्रतिभानापरपर्याय-साक्षात्कारस्वभावेयमिति। अभि.भा., भा. १. पृ० २८०

UGC - CARE Listed
जनवरी–मार्च, 2020
शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# आयुर्वेद-ज्यौतिषशास्त्रदृष्ट्या हृद्रोगनिदानम्

डॉ. सुभाषचन्द्रमिश्रः*

**आयुर्वेदावतरणं निम्नप्रकारेणाऽस्ति[1]-**

ब्रह्मा- दक्षप्रजापतिः- अश्विनीकुमारौ- इन्द्रः- महर्षिभारद्वाजः- पुनर्वसुः अस्ति। पुनर्वसोः षट् शिष्याः निम्नप्रकारेण यथा- अग्निवेशः, भेलः, जातुकर्णः, पराशरः, हारीतः, क्षरपाणिश्च।

**त्रिसूत्रम् अस्मिन्नेव सन्ति।[2] यथा-**

**हेतुलिङ्गौषधं ज्ञानं स्वस्थातुरपरायणम्।**
**त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः।।**

आयुर्वेदस्य हेतुः अस्ति, निदानम्। हेतुलिङ्गौषधज्ञानमिति हेत्वादीनि ज्ञायन्तेऽनेनेति हेतुलिङ्गौषधज्ञानं यावच्चायुर्वेदवाच्यं तावद्धेत्वान्तर्भूतमित्यर्थः। हेतुग्रहणेन सन्निकृष्टविप्रकृष्टव्याधिहेतुग्रहणं लिङ्गग्रहणेन च व्याधेरारोग्यस्य च कृत्स्नं लिङ्गमुच्यते। तेन व्याधेरारोग्ये च अपि लिङ्गशब्दवाच्यः।

**आयुर्वेदस्य परिभाषा[3]-**

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते।।**

हितं चाऽहितं च हिताहितं, तथा सुखयुक्तत्वात् सुखं, दुःखयुक्तत्वात् दुःखं एतच्च चतुरप्रकारमप्यायुरर्थे। यथा-हितायुः, अहितायुः, सुखायुर्दुःखायुश्चेति।

**आयुषः लक्षणं पर्यायश्च[4]-**

**शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितम्।**
**नित्यगश्चानुबन्धश्च पर्यायैरायुरूच्यते ।।**

---

सहायकाचार्यः (अनुबन्धितः)
ज्योतिष विभागः केन्द्रियसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः, जयपुरम्, राजस्थानम्।

१. ब्रह्मणा हि यथा प्रौक्तमायुर्वेदं प्रजापतिः।
जग्राह निलिखेनादावश्विनौ तु पुनस्ततः।। चरकसंहिता-१/४।
अश्विभ्यां भगवाच्छक्रः प्रतिपदे हि केवलम्।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागत्।। चरकसंहिता-१/५।

२. संक्षिप्त चरक संहिता- दीर्घ जीवितीया अध्यायः एवच्च चरक संहिता, पृ. सं.-२, १/२४ ।

३. चरकसंहिता - १/४१ ।

४. चरकसंहिता - १/४२।

शरीरं पंचमहाभूतविकारात्मकमात्मानो भोगायतनम्, इन्द्रियाणि चक्षुरादीनिः, सत्वं मनः, आत्मा ज्ञानप्राप्तिः सन्धाता, एषां सम्यग्दृष्ट्यात्रितरे योगः संयोगः। तस्यायुषः पर्यायः धारित्यादि। **धारिः**- धारयति शरीरं पूतितां गन्तुं न ददातीति धारिः। जीवयति प्राणान् धारयतीति जीवितम्। नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति नित्यगः अनुबन्धा-न्यायुपरापरशरीराविसंयोगरूपतयेत्यनुबन्धः।

**द्रव्यगणनाप्रकार:**[1]-

**खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।**
**सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्॥**

**द्रव्यं द्विविधम्**- १. कारणद्रव्यं। २. कार्यद्रव्यं।

**१. कारणद्रव्यं** - पंचमहाभूतं, कालदिशामनश्चेति ।

**२. कार्यद्रव्यं**-कार्यद्रव्यमपि द्विधा भवति। चेतनः अचेतनश्च १.चेतन-चेतनः इन्द्रियुक्तश्चेनि। २. अचेतनः- इन्द्रियरहितश्चेति।

चेतनद्रव्यस्य भेदद्वयं भवति। १. अन्तश्चेतनः- अन्तश्चेतनश्च द्रव्यः अस्मिन्नेव प्रकारेणास्ति। यथा- वनस्पति, वीरूधः, वानस्पत्यः, औषधिः। २. बहिरन्तश्चेतनद्रव्यम्- यथा- (जांगम) जरायुजः, अंडजः, स्वेदजः, उद्भिजः।

अचेतनद्रव्यं द्विधम्-कृत्रिमप्राकृतश्च। व्याधयः, द्विविधाः- साध्यासाध्यश्चेति।

साध्यव्याधिः द्विप्रकारका भवति[2]-१. मृदुः, २. दारूणः। असाध्यव्याधयः अपि द्विप्रकारा भवन्ति याप्यः प्रत्यारव्येयश्च।

रोगस्य कारणत्रयं भवति- कालः बुद्धिः, इन्द्रियविषयश्च।

इन्द्रियविषयाः त्रिप्रकारका सन्ति- १. मिथ्यायोगः, २.आयोगः, अतियोगाश्च।

अन्यरोगप्रकारकाः- प्रज्ञापराधः, परिणामः, आत्म्येन्द्रियार्थसंयोगः।

रोगस्य आश्रयः मनः शरीरश्चेति। अतः बुद्धिः सुखस्य आश्रयः अपि मनः शरीरश्चेति। इन्द्रियार्थसंयोगैव मुख्यकारणं भवति।

**प्रज्ञापराधः**- बुद्धिः, धृतिः, स्मृतिमष्टवशात् मनुष्याणां अनुचितकार्य प्रवृत्तिः।

**कालसम्प्राप्तिः**- कालस्य गुणानुसारेण अतियोगः १. आयोगः, मिथ्यायोगश्च।

**असात्मेन्द्रिय संयोगः**[3]- इन्द्रियाणाम् इन्द्रियार्थे कृते अतियोगः, आयोगः मिथ्यायोगैव, आत्म्येन्द्रियार्थसंयोगः।

**कालः**[4]- यदृत्वनुसारेण उष्णः, शीतः, वर्षा इत्यादिः।

**शारीरिकदोषः**- त्रिदोषाः उच्यन्ते- १. वातः, २. पित्तः, ३. कफः।

---

1. चरकसंहिता - १/४८ ।
2. चरकसंहिता सूत्रस्थानम् पृष्ठ - ३२ अध्यायः - ८, त्रिशोधीयाध्यायः।
3. चरकसंहिता सूत्रस्थानम् - ११/३७ ।
4. चरकसंहिता सूत्रस्थानम् - ११/४२ ।

**मानसिकदोषः**- १.रजः, २.तमः (रजः प्रधानास्ति)।

**हृद्रोगः**- हृदयरोगः पंचप्रकारकाः सन्ति- १. निजः, २. आगन्तुकः, ३. वातजः, ४. पित्तजः, ५. कफजः।

**रोगाणाम् अधिष्ठानम्**- १.मनः, २.शरीरं च भवति।

**सहजरोगः**- यस्य रोगस्य सम्भावना जन्मकालादेव भवति। अस्मिन् रोगे दोषोपरान्तं कष्टं भवति।

**आगन्तुकरोगः**- यस्य रोगस्य सम्भावना जन्मोपरान्तं भवति, स एव रोगः। अस्मिन् रोगे प्रथमेव कष्टं तदुपरान्तम्- रूग्णता जायते।

आगन्तुकनिजरोगस्य कारणं मुख्यतः, आत्मेन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति। दोषः तस्य अधिष्ठानश्च।

**दोषः**- वातः, पित्तः, कफः।

**चरकानुसारेण**- पक्काशयः, आमाशयः, वक्षस्थलम्।

**वाग्भट्टानुसारेण**- हृदनाभिश्च अधः प्रदेशः, हृदनाभिश्च, मध्यप्रदेशः, हृदनाभिश्च ऊर्ध्वप्रदेशः।

**नानात्मका विचारः**-१४० विकारः(शत् चत्वारिंशत) मात्र एकदोषात्। १.वातजः ८०(अशीतिः), २.पित्तजः ४०(चत्वारिंशत्), ३. कफजः २०(विंशति)।

प्रश्नमार्ग ग्रन्थेः वर्णितोऽस्ति[1]-

**आयुरेव विशेषेण प्रथमं चिन्त्यतेऽधुना।**
**स्वस्थमुद्दिश्य वा प्रश्नं एव वातुर मित्थम्॥**

**रोगोत्पत्तिकारणम्**-

आयुर्वेदानुसारेण[2] कर्मप्रकोपः, दोषः प्रकोपः, एव रोगोत्पत्तिः कारणं भवति। उक्तम् यत्- सामान्यतया, मिथ्याहारः विहार एवं रोगस्य कारणं भवति। परश्च यदा रोगः किंचित् विनैव उत्पद्यते, तर्हि सः कर्मजन्यो रोगोस्ति। मिथ्यायोगः[3] अपि च रोगस्य कारणं भवति।

दर्शनशास्त्रानुसारेण- कर्मणश्च, त्रयः भेदाः सन्ति। १.सञ्चितम्, २.प्रारब्धम् ३.क्रियमाणंञ्चेति।

**प्रश्नमार्गे इदं वर्णितमस्ति**-

**जन्मान्तरकृतं कर्म व्याधिरूपेण ज्ञायते।**[4]

यथोक्तं शतातायीयग्रन्थे न पूर्व जन्मकृतकर्मानुसारेण जातकः कुष्ठ, क्षयः,

---

1. प्रश्नमार्ग - ९/३ ।
2. कर्मजा व्याधयः, क्वचिद् दोषजाः सन्ति चापरे - सु.सं.। निदान स्थान ५/२९।
3. सु.सं. - उत्तरतंत्र विमर्शः ४०/१६३।
4. प्रश्नमार्ग- १३/२९ ।

प्रमेहः, संग्रहणीः, मूत्रकृच्छः, अश्मरी, कासः, अतिसारः, एवच्च भगन्दरः सदृशरोगागैः ग्रस्तोस्ति।

**पूर्वजन्मकृतं पापं नरकस्य परीक्षये।**
**बाधते व्याधिरूपेण तस्य कृच्छादिमिशमः।।**
**कुष्ठश्च राज्यक्ष्मा च, प्रमेहो ग्रहणी तथा।**
**मूत्रकृच्छाश्मरी कासा अतिसार भगन्दरौ।।**

जन्मान्तरकृतं कर्म व्याधिरूपेण जायते। जन्मान्तरकृतशुभाशुभकर्मवशात् जातकस्य जीवने कदा-कदा, कस्य-कस्य, रोगस्य सम्भावना स्यात् तस्य सम्बद्धे विवेचनं केवलं ज्योतिषास्त्रे एव भवति। यथोक्तं वराहमिहिरेण-

**यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम्।**
**व्यंज्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव।।**

हृदयरोगस्य विचारः मुख्यतया चतुर्थभावेन क्रियते तथा अस्मिन् हृदयरोगे चतुर्थेश्य भूमिका महत्त्वपूर्णा भवति। यदि चतुर्थभावे चतुर्थेशं च पापग्रहस्य प्रभावश्चेत् जातकः हृदयरोगी भवति। अथ रोगस्य प्रमुखमपि एकं कारणं मनसि मस्तिष्के च तनावस्थितिर्वर्तते। यतो हि प्रायशः दृश्यते यत् आवेगोद्वेगे संवेगादीनाम् उग्रतया हृदयघातो भवति सूक्ष्मतया पश्यामश्चेत् चतुर्थभावेन मनसः, पंचमे च मस्तिष्कस्य विचारं कुर्वन्ति ज्योतिर्विदः।[१]

अतः ज्योतिषाचार्यैः श्रीवैद्यनाथादिभिः प्रायशः चतुर्थे, पंचमे च भावे पापग्रहाणां स्थित्या हृदयरोगस्य कारणं प्रोक्तम्। जातकग्रन्थेषु अस्य रोगस्य कृते अनेकेषां योगानां वर्णनं प्राप्यते, येषु केचन निम्नांकिताः सन्ति। हृदयरोगस्य मुख्यतया त्रयः प्रकाराः भवन्ति।[२]

१. हृदयगतविकारः-यथा- रक्तचापः, न्यूनताधिकताश्च, हृदयाघातः, हृदयाशिराणाम् अवरोधः इत्यादयः।

२. हृदशूलः- यस्मात् हृदये तीव्रवेदना भवति।

३. हृदयञ्चः- हृदयस्य आवेगोद्वेगादिभिः कृदकम्पः समुद्भवति।

**हृदयगतविकारः[३]-**

तत्र प्रथमे प्रकारे निम्नप्रकारकैः योगैः हृदयरोगस्य विचारः क्रियते।

---

१. लघुजातकम्- १/२ ।

2. रोगस्य चिन्तामपि रोग भाव स्थितैः ग्रहै वा व्यय मृत्यु स्त्रंस्थै।
रोगेश्वेराणां तदन्तीतैर्वा वित्त्यादि संयोगवशाददन्तुम।।
फलदीपिका, रोगाध्याय:श्लोक -१
एवच्च हृद्रोगी पंचमे पापे स पापे च रसातले,
क्रूर षष्ठयंशसंयुक्ते शुभदृग्योग वर्जिते।।
जातक परिजात अरिष्टाध्याय ।

3. सर्वार्थचिन्तामणिः ५/६५-६७।

१. चतुर्थे पापग्रहः तथा चतुर्थेशः पापग्रहयुक्तो स्यात्।

२. चतुर्थेशोऽष्टमेशेन सह अष्टमे स्यात्।

३. नीचराशिगः शत्रुराशिगः अथवा अस्तंगतः चतुर्थेश अष्टमे स्यात्।

४. चतुर्थे पापग्रहः तथा चतुर्थेश पापग्रहाभ्यां युतो स्यात्।[१]

५. चतुर्थेशः यस्य नवमांशे स्यात् तस्य स्वामी क्रूर षष्ठ्यंशे स्यात् अथ तस्मिन् क्रूरग्रहाणां दृष्टिरपि भवति।

६. चतुर्थे शनिः सूर्यौ तथा षष्ठेशः पापग्रहा क्रान्तः स्यात्।[२]

७. सूर्यो भौमः ग्रीवाः चतुर्थे स्यात्।

८. चतुर्थे पंचमे च पापग्रहाः स्युः।

९. चतुर्थे पंचमे वा क्रूरषष्ठ्यंशः स्यात् तथा शुभ ग्रहैर्दृष्टोऽयुतो वा स्यात्।[३]

१०. चतुर्थे शनिः स्यात्।

११. सूर्यः कुम्भराशौ स्यात्।

**२. हृद्शूलः**[४]- हृद्शूलस्य विचारः चतुर्थेन चतुर्थेशेन सूर्येण च भवति। अस्य रोगस्य योगाः निम्नप्रकारकाः सन्ति।

१. चतुर्थे स्थितो राहुः पापग्रहैः दृष्टः निर्बलो वा स्यात्।

२. यदा चतुर्थराशीशः तस्य नवांशः स्वामिनः क्रूरषष्ठयंशे स्यात् एवं च पापग्रहाणां दृष्टिः स्यात्।

३. सूर्यः पापग्रहयुक्तश्च वृश्चिकराशौ स्यात्।

४. षष्ठस्थानस्य सूर्यः पापाक्रान्त स्यात् एवं च शुभग्रहः षष्ठे, व्यये, वा स्यात्।[५]

५. जातकस्य कुण्डल्यां द्वादशस्थभावशात् जातकः वायुविकारेण पीड़ितो स्यात् तेऽपि च रोगस्य कारणं भवति।[६]

**२. हृदकम्पः** - यदा कोऽपि जातकः हृदयस्थरोगस्य पण्डितः स्यात् एवं च तस्मात् रोगस्य निदानं सम्यक् रूपेण न भवति, तर्हि तस्मात् जीवने हृदयरोगस्य सम्भावना उत्पद्यते।

अस्मिन् संसारे ये शास्त्रास्ति ते सर्वेऽपि जगतः अंशात्मकं वर्णनं करोति, परञ्च ज्योतिषः शास्त्रम् अन्तः बाह्यजगतश्च सम्बन्धश्च उद्घाटयति। ज्योतिषशास्त्रे सत्य इति शब्दस्य परिभाषा दर्शनविज्ञानम् एव च न न अस्ति परश्च तस्मात् अग्रे अस्ति।

मानवस्य कृते यदा दर्शनम्, भौतिकशास्त्रम्, नैराश्यवादः, वैराग्यः, उत वा

---

१. जातकालंकारः श्लोक - ३५-३६।।

2. जातकालंकारः श्लोक -३५-३६।।

3. जातकपारिजातः - १३/७७ ।

4. जातकपारिजातः - १३/७७ ।

5. सारावली - ३०/७७ ।

6. सारावली - २३/६४ ।

भयोत्पादकता सम्बन्धी विवेचनं प्रस्तोतुम्, तत्र ज्योतिषशास्त्रं तस्मिन् स्थाने कर्त्तव्यनिष्ठा, कर्त्तव्यपरायणता एवं च भविष्यसम्बन्धिचिन्तनं प्रस्तुतमस्ति। जातकस्य जीवने अनुकूलताः प्रेरणाश्च प्रस्तूयन्ते। अस्य प्रेरणा पुरूषार्थसाधिका एवं च दुःख विधातिका भवति।

**रोगः किम् अस्ति ?**

अस्माकं शरीरे उत्पन्नाः विकाराः येभ्योऽहं दुखं प्राप्नोमि स एव रोगः। अस्य रोगस्य उत्पत्तिकारणं, लक्षणं, भेदः एवं च चिकित्साविधेः आयुर्वेदज्योतिषशास्त्रमध्ये बहवः सम्भावनाः सन्ति। यथोक्तम् -सुश्रुतसंहितायाम्[१] -

**आयुः पूर्वं परीक्षेत पश्चाल्लक्षणमादिशेत् ।**
**अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम् ॥**

वातजः अर्थात् वातजन्य विकारः।

वायुगुणः - रूक्षता, शीतलता, लघुता, विशदता, गतिः, अमूर्तता।

वायुकर्म - (१३) त्रयोदशकर्माणि- स्त्रंसः, भ्रंसः, व्यासः, संगः, भैदः, सादः, हर्षः, तर्षः, कम्पः, वर्तः, चालः, तोदः, व्यथाः, चेठराः।

वातचिकित्साः[२] - स्त्रिग्धः, उष्णः, मधुरः, अम्लः, लवणः, स्त्रेहः, अपस्थापनः, अनुवासनः वस्तिः।

पित्तस्य गुणः[३] - उष्णता, तीक्ष्णता, सरः, द्रवः, सस्त्रेहमुष्णं, तीक्ष्णं च द्रव अम्लं सरं कर्तु।

कफस्य गुणः[४] - गुरूः, शीतः, मृदुः, स्त्रिग्धः, मधुरः, स्थिरः, पिच्छिलाः।

गुणविपरीत चिकित्सा - लघु, उष्णताः, काठिन्यम्, रूक्षः, कटुः, चलः, विशदः।

पित्तकर्म[५] - दाहः उष्णता, पाकः, स्वेदः, क्लेदः, कण्डूः, स्त्रावः।

चिकित्सा - मधुरः, तिक्तः, कषायः, शीतवीर्यः (विरेचन उत्तमम्)।

भारतीयज्योतिषशास्त्राणाम् इदं रहस्यम् अस्ति। यदा इदं शास्त्रं सम्यग्रूपेण, सत्यचिन्तनम्, करिष्यति एवं च जीवने सत्यं किम् अस्ति। तस्य विश्लेषणम् अपि करिष्यति तदा। निम्नांकितयोगस्य माध्यमेन तस्य निदानं कर्तुं शक्यते।

१. यदा चतुर्थे स्थाने शुभग्रह भवति।
२. यदा जातकस्य जन्मकालः सूर्यादयोपरान्तम् एवं च सूर्योदयात् पूर्वं एव भवति। एवं च भौमः गुरूणां दृष्टः स्यात्।
३. शुभ ग्रहः क्रूराक्रान्तः स्यात् एवं च षष्ठेशः पापग्रहयुक्तः भवति।
४. सूर्यस्य वृश्चिक राशेः स्यात्।

******

1. सुश्रुतसंहिता सूत्रस्थानम् २५/४-१० एवं २५/१-३ तक।
२. चरकसंहिता पृष्ठ -३६ ।
3. गदावली - ६/90 ।
4. गदावली - २/२५ ।
5. गदावली - २/२६।

UGC - CARE Listed
जनवरी–मार्च, 2020
शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# श्रुतिनिगदितस्य सुसहसिद्धान्तस्य मानवश्रेयःसाधनताया विमर्शः

डॉ. अनुला मौर्या*
डॉ. दिव्या मिश्रा**

गवेषणात्मके शोधप्रस्तावेऽस्मिन् समाजे व्याप्तानां समस्यानां निराकरणाय वैदिकः सुसहसिद्धान्तः कथं समर्थः कथञ्चानेन पथेन मानवः श्रेयो विन्दतीति व्यचारि। अत्र खण्डद्वयमस्ति, प्रथमे खण्डे समाजसंघटनसन्दर्भे आधुनिकानां विभिन्नविचारकाणां मतानि समीक्ष्य सामाजिकस्तरीकरणमभिलक्ष्य वर्तमानसमस्यानां विश्लेषणं कृतम्। द्वितीये खण्डे वैदिकः सुसहसिद्धान्तः कथं मानवानां समाजस्योन्नयने तच्छ्रेयःसाधने च सहायक इति प्रतिपादितम्।

भारतीयपरम्परानुसारं वैदिकं ज्ञानं नित्यमनाद्यपौरुषेयमीश्वरकृतं वा स्वीक्रियते। तत्राधुनिकानामापत्तयः सम्भाव्यन्ते किन्त्वेतत् सुनिश्चितं यद् वैदिकाः ग्रन्थाः उपपत्तितोऽलौकिक्या प्रेरणया आन्तरेण ज्ञानेन चानुप्राणितानां मनीषिणां रचनाः सन्ति, यत्र सुदीर्घकालिक्या ज्ञानसाधनाया ऋतम्भरायाः प्रज्ञायाश्च प्राकट्यं वर्तते। वैदिकज्ञानं न केवलं तदुत्तरकालिक्याः सम्पूर्णाया भारतीयज्ञानपरम्पराया मूलमपितु सम्पूर्ण एव मानवेतिहासस्य आत्मविमर्शस्यात्मोपलब्धेश्च प्राचीनतमं विवरणमस्ति।

वैदिकेऽस्मिन् वाङ्मये स्तुतीतिहासयज्ञविधानप्रार्थनाज्ञानविज्ञानलोकविधानादयोऽनेके विषयाः समुपनिबद्धाः सन्ति। संहिताभ्य आरभ्यौपनिषद् विस्तृतं वैदिकं वाङ्मयं श्रुतीति वेदेति संज्ञया वाभिधीयते। तत्र सामाजिकी व्यवस्था सुसहभावेन कथं सम्यक् प्रचरेन्मानवश्च लोककल्याणं विदधच्छ्रेयः कथं प्राप्नुयादिति सोपपत्ति विवृतं वर्तते।

वैदिकं वाङ्मयं न केवलं भारतीयानां कृतेऽपितु मानवमात्राय पुरुषार्थप्राप्त्यै दिव्यां प्रेरणां ददाति। ऋषीणां नेदमप्रतीतमासीद् यत् कामक्रोधलोभमोहमदमात्सर्येत्यरिषड्वर्गस्य वशीभूता मानवा व्यवहारे सद्वृत्तताया विपरीतमाचरन्ति कष्टं च लभन्ते। अर्थप्रधानेऽस्मिन् युगे तु सनातनमर्यादाया विश्रृङ्खलितो मानवोऽतितरां विपद्ग्रस्तो दरीदृश्यते। हिरण्यमयेन पात्रेण सत्यस्य मुखं तत्कृते पिहितं भवति। दर्शं दर्शमिदं तथ्यं वैदिको ऋषिः सत्यस्य साक्षात्काराय प्रेरयति मनुष्यान्। श्रुतिर्यत्रात्मसाक्षात्कारेणैवाधिदैविकाधिभौतिकाध्यात्मिकेति त्रिविधतापेभ्यो मुक्तिं निर्दिशति तत्रैव सांसारिकजीवनस्यापि सार्थकताया रहस्यमुद्घाटयन्ति

---

*कुलपतिः, जगद्गुरुरामानन्दाचार्यराजस्थानसंस्कृतविश्वविद्यालयः, जयपुरम्
**सहायिकाचार्या, संस्कृतविभागः कालिन्दीमहाविद्यालयः नवदेहली

सा श्रुतिः –

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।'[1]**

इत्यादिभिर्वाक्यैः मानवस्य कृते कर्माचरणमावश्यकं स्पृहणीयं च मनुते। विभिन्नाभ्यः समस्याभ्यः पूरितं मायिकमपीदं जगदीशावास्यमस्ति तत्र त्यागपूर्वको विषयोपभोगः समाजे निवसतो जनस्य श्रुत्यनुमतोऽस्ति।

संस्कृतभाषायाम् 'समजः समाजः' इति द्वौ शब्दौ प्राप्येते। तत्र 'समज' शब्दः पशूनां सङ्घार्थे प्रयुक्तो वर्तते[2] समाजशब्दश्च मनुष्याणामन्येषां वा पशुभिन्नानां सङ्घार्थे।[3] वस्तुतः प्राचीनकालादेव मानवः समाजबोधसमन्वित आसीत्। यूनानदेशीयः 'अरस्तू' इत्याख्यो विख्यातो महान् दार्शनिकः स्वीचकार यत् मनुष्य एकः सामाजिकः प्राण्यस्ति।[4] समाजस्याभावे तस्य जीवनं दुष्करं भवति। समाजशास्त्रविदः 'मैकीवर' इत्याख्यस्य 'पेज' इत्याख्यस्य च मतानुसारं 'समाजः सामाजिकसम्बन्धानामेतादृशं वितानमस्ति यन्निरन्तरं परिवर्तनशीलं भवति।'[5] यत्रान्योन्यस्यास्तित्वस्य बोधः स्यात्, बोधममुंचाधारीकृत्य परस्परं व्यवहरणं स्यात् तत्रैव सामाजिकस्य सम्बन्धस्य समाजस्य चास्तित्वं भवति। मनुष्यो यद् यदाचरति तत्सर्वं सामाजिकरीतिष्ववधारणासु चाश्रितं भवति। मनुष्यः स्वावश्यकताः पूरयितुं समुदायं निर्मिमीते। अस्यां प्रक्रियायां स्वसामर्थ्यानुसारं तत्र भेदो जायते। अत एव मानवसमाजे सहजा स्वाभाविकी च वर्गनिर्मितिर्भवति। एवं समाजेनानेन सम्बद्धाश्च सर्वे सदस्याः येन केनापि स्तरेण सम्बद्धा एव जायन्ते। एतेषु स्तरेषु यत् पार्थक्यं भवति तन्नियतं भवति। आगामिनि काले च कर्मानुरूपं युगधर्मानुरूपं च स्तरेष्वन्यतमः श्रेष्ठोऽन्यतमश्च हीनः स्वीक्रियते। मानवीययानुभूत्येदं प्रमाणितं वर्तते यत्तादृशः पूर्णतया समः समाजो यत्र कश्चिदन्येभ्योऽधिकेन प्रभावेण प्रतिष्ठया धनेन वा सम्पन्नो न स्यान्नितरामसम्भवी। तथ्यमिदं –

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।**
**आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे॥[6]**

इत्यृग्वैदिकमन्त्रेण समर्थितं वर्तते। अस्य मन्त्रस्याभिप्रायोऽस्ति यत् समानवयस्काः सखायः चक्षुरादिज्ञानेन्द्रियाणां समत्वेऽपि मनोजवेषु तथैव असमा भवन्ति यथा जलग्रहण-सामर्थ्यमाधारीकृत्य जलाशयेषु केचिज्जानुदघ्नाः, केचिदुपकक्षाः केचिच्चागाधा भवन्ति जलाशयाः। एवमेव समाजेऽपि श्रेणीबद्धतापरिहार्या भवति। विश्वस्य सम्पूर्णेषु समाजेषु

1. ईशोपनिषद्, 2
2. (क) पशूनाम् समजः, अमरकोशः पृ. 202, श्लोक 42
   (ख) समुदोरजः पशुषु, पाणिनि सूत्रम्, 3/3/69
3. अन्येषां समाजः, अमरकोशः पृ.202, श्लोकः 42
4. Man is a Social Animal, Aristotle.
5. R.M. MacIver & Charles H. Page, Society, An Introductory Analysis, New Delhi, Macmillan India Ltd., 1981, p.5
6. ऋग्वेदः, 10/71/7

कश्चिदपि जनः स्वीयायाः श्रेण्या अनुसारं प्रतिष्ठायामधिकृतो भवति। तद्रूपेणैव अन्यैरपि सः स्वीक्रियते। एवं जनैरधिगतां विभिन्नां प्रतिष्ठां प्रस्थितिं वाधारीकृत्य समाजे विभिन्ना वर्गभेदा भवन्ति। विभिन्नेष्वेतेषु भेदेषु मध्ये कश्चिद् भेदः श्रेष्ठत्वेन कश्चिच्च हीनत्वेनावसीयते।[1] एकस्मिन् स्तरे समाहितानाम् जनानां प्रतिष्ठायां प्रायशः साम्यं भवति। एतस्यां प्रक्रियायां तेषां विशिष्टं लक्षणं विकसितं भवति। सामान्यस्तरीयाणां जनानां मध्ये सामान्यहितचेतनाया जागरा भवति। मनुष्यः समुदाये निवसन्नेव स्वलक्ष्यसिद्ध्यै समानहितपूर्त्यै च पारस्परिकसहयोगमाश्रित्य सामाजिकसम्बधं संस्थापयति। यदा विभिन्नानां जनानां हितानि परस्परमेकीभूतानि भवन्ति, तदानीं तेषु परस्परं सहयोगस्य सामञ्जस्यस्य सहभागितायाश्च भावना प्रादुर्भवति, किन्तु यदा भिन्नानां जनानां हितेषु समरूपतायाम् सत्यामपि प्रतिद्वन्द्विताप्रतिस्पर्धे जायेते तदा संघर्षस्य स्थितिरुत्पन्ना भवति। संघर्षस्थितिमिमान्निवारयितुं समाजे सहयोगस्य सहभागितायाः सामञ्जस्यस्य समरूपतायाः मैत्रीभावस्य सद्भावस्य च स्थापना तदैव सम्भवति यदा समाजस्य सदस्यानां स्वार्थे साम्यं स्यात्। इदं स्वार्थसाम्यमार्थिकराजनीतिकसांस्कृतिकादिक्षेत्रेषु सम्भवति।

समाजे समरूपतायां सत्यामपीदमपि सम्भवति यत् सामाजिकसदस्यानां मध्ये असमानतायाः, असामञ्जस्यस्य विषमरूपताया विरोधस्यापि च भावनाः सम्भवेयुः। वस्तुत एतादृश्या विषमतायाः कारणेषु जनानां रुचिभेदः, आयुर्भेदः, लिङ्गभेदः, सामर्थ्यभेदः, बुद्धिभेदश्चेति प्रधानानि कारणानि भवन्ति। परन्तु समाजे जीवत्सम्बन्धान् संस्थापयितुमीदृशानां भेदानामावश्यकताऽपि भवति, अन्यथा निष्क्रियताया, जडतायाः स्थिरतायाश्च स्थितिरुत्पद्येत। विरोधो नूतनं जीवनं संचारयति, प्रायशो मृतेष्वपि सम्बन्धेषु प्राणसंचारं करोति, जीवनायैकां नूतनां गतिं लयं च प्रददाति। एवं समाजे समरूपताया विषमरूपतायाश्चेत्युभयोरपि स्थितिरनिवार्या। समरूपतां विषमरूपतां चाश्रित्यैव भारतीयसमाजे वर्णव्यवस्थाया आविर्भावो जातः। भारतीयपरम्परायां गुणकर्मानुसारं ब्राह्मणक्षत्रियविट्छूद्रेति चत्वारो वर्णाः स्वीकृताः। ऋग्वेदस्य पुरुषसूक्ते विराटपुरुषात् वर्णोत्पत्तिः स्वीकृताऽस्ति-

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरु तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥**[2]

ऋग्वैदिके समाजे एकस्मिन् वर्ण उत्पन्नो जनोऽन्यस्य वर्णस्य कर्म स्वीकर्तुं स्वतन्त्र आसीत्। एकस्यैव कुलस्य पिता वैद्यस्तस्य पुत्रः कारुर्माता चोपलप्रक्षिण्यासीत्।[3] वैदिके काले कर्मणः प्राधान्यमासीत्। वर्णव्यवस्था च विकाररहिता आसीत्। श्रेष्ठत्वं कर्मसापेक्षमासीन्न जन्मसापेक्षम्।[4] महाभारतस्य शान्तिपर्वणि विवृतमस्ति यत् पूर्वं सर्व एव ब्राह्मणा आसन्। किन्त्वनन्तरं कर्मभेदवशात् त एव वर्णान्तरं गताः।[1] गीतायामप्युच्यते -

---

1. New Dictionary of Sociology, ed. G. Ducan Mitchell
2. ऋग्वेदः, 10/90/12
3. ऋग्वेदः, 9/112/3
4. अथर्ववेदः, 7/52/8

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।'[2]

तथापि अनन्तरभाविनि काले वर्णव्यवस्था जन्माश्रितैवाभूत् शास्त्राणां शस्त्राणां च कुलक्रमागतायाः शिक्षायाः कारणात् ब्राह्मणत्वं, क्षत्रियत्वं चानुवंशिकेऽभूताम्। अन्ये चापि व्यवसाया आनुवंशिका अभूवन्। इत्थं शैल्पिकेषु नृतात्त्विकेषु च भेदेष्वाश्रिताया आनुवंशिकतायाः कारणेन वर्णव्यवस्थाया अन्तर्जातिव्यवस्थाया विकासः समभवत्। वर्णव्यवस्थायाः कारणेन समाजे काश्चित् विसङ्गतयः प्रादुर्भूताः यतो ह्यस्यां व्यवस्थायां शूद्राणां सम्मानः नासीत्। वर्णव्यवस्थाया विभाजनं गुणाश्रितं कर्माश्रितं वाभविष्यच्चेदेता विसङ्गतयो नाभविष्यन्।

वर्णव्यवस्थायाः कारणेन वर्णानां मध्ये संकीर्णभावनाया आविर्भावो भवति। येन तेषु मध्येऽनेकरूपतोत्पद्यते। अथ च राष्ट्रियभावनाया अभ्युदये बाधोत्पद्यते। समाजे या विषमता आविर्भूता भवति हीनस्य उत्तमस्य च स्तरस्य निर्धारणं जायते, तेनार्थिककारणैः परस्परं कलहो भवति। गुणानां स्थाने धनस्य महत्त्वमधिकं भवति। 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः'[3] इत्यस्याः स्थाने 'सर्वे गुणाः काञ्चनमाश्रयन्ति' इति भावनाया आविर्भावो भवति। स एव श्रेष्ठः मन्यते यस्याधिकारे अधिकं धनं भवति।[4] अथ च धनवतामेवाज्ञापालनं क्रियते।[5] अद्यत्वेऽर्थप्रधानेऽस्मिन् युगे यत्र सम्पूर्णे एव राष्ट्रे मानवसमाजः स्वीयायाः सनातनमर्यादाया विशृङ्खलो भूत्वा परस्परमीर्ष्याकषायितोऽस्ति तत्र वेदानां तत्सारभूतानामुपनिषदाञ्च शिक्षायाः प्रासङ्गिकत्वमतीव समेधितं वर्तते। श्रुतीनाम् आदेशो वर्तते-

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।।**[6]

अस्यार्थोऽस्ति यदस्मिन् जगति यत्किञ्चिदपि विद्यते तत्र सर्वत्र परमेश्वरस्य निवासोऽस्ति। क्षुद्रं वस्तु किञ्चिद् स्यात् मानवो वा कश्चित्, सर्वमेव परमेश्वरस्यैवांशः। मानवो मतिमान् प्राण्यस्तीत्यतः श्रुतिस्तमुपदिशति यद् भोगापेक्षया त्यागो दानं वा श्रेयसे भवति कस्यचिद् धनाद्यन्यो नैव स्पृहयेत्। एवममुं श्रुत्यादेशमङ्गीकृत्य मानवः पारस्परिक-मुच्चावचभेदं विगलय्य स्वकीयां रक्षां कर्तुं शक्नोति। भारतीया संस्कृतिः सारगर्भिता, शान्तेः प्रगतेश्च मार्गदर्शिका वर्तते। अद्यत्वे विश्वस्मिन् पाश्चात्त्यदेशीयैः या मानवाधि-काराणां सुरक्षा, मानवतावादिनी दृष्टिः, विश्वकुटुम्बस्य भावना, विश्वशान्त्यै प्रयास इत्यादयः उत्तराधुनिकविशिष्टताः स्वीकृताः सन्ति ताः सर्वा वैदिकसंस्कृतावादर्शरूपेण स्वीकृता

1. महाभारतशान्तिपर्व, 188/10-10
2. श्रीमद्भगवद्गीता, 4/13
3. उत्तररामचरितम्, 4/11
4. ऐतरेय ब्राह्मणम्, 1/5
5. ऐतरेय ब्राह्मणम्, 2/5
6. ईशोपनिषद्, 1

आसन्। अस्माकं देशे एता विशिष्टता मूल्यरूपेण प्रतिष्ठापिताः सन्ति। संहितास्वेव 'आ नो भद्राः क्रतवो यन्तु विश्वतः'[1] इति मन्त्रेण विश्वकल्याणस्य, 'स्वस्तिपन्थामनुचरेम'[2] इति मन्त्रेण सदाचरणस्य च भावनायाः प्रतिपादनमकारि एवमेव समाजस्य बलमयत्वस्य तेजोमयत्वस्य च प्रार्थना कृता विद्यते।[3] एवं विचारिते स्पष्टं प्रतिभाति यत् वैदिकर्षिभिः जीवनस्यैहिकानि, पारलौकिकानि वा सर्वाणि तत्त्वानि गम्भीरतया सम्यक् परिशीलितानि सन्ति तैश्च तेषां वेदमन्त्रेषु साध्वभिव्यक्तिर्विहिता। अद्य विश्वस्मिन् स्वस्याः सामूहिक्याः सम्मानपूर्णायाश्च सत्तायाः सुरक्षायाः कृते इदं परमावश्यकमस्ति यत् समाजे समूहबुद्धिः स्यात्। तदैव देशरक्षा सम्भवति। समूहबुद्ध्यैव राष्ट्रस्योन्नतिः, राष्ट्रस्य सम्मानितञ्चास्तित्वं सम्भवतः। राष्ट्ररक्षायै सदैव संघटितैर्जागरुकैश्च भाव्यं किन्त्वत्रैष प्रश्नो वर्तते यत् राष्ट्रस्य मानवाः कथं संघटिताः स्युः किं जातीयमैक्यमाश्रित्यैवं सम्भवति? अस्य समर्थने युक्तिरियं दातुं शक्यते यदेकस्यां जातावुत्पन्नानां जनानां मध्य ऐक्यस्य भावना स्वत आविर्भवति। किन्त्विदं नावश्यकं यदेकस्मिन् देश एकस्या एव जातेर्जना निवसेयुः। अत्र तु एकस्यामेव जातावुच्चावचानेकप्रकारकस्तरभेदकारणात् अनेका उपजातयो दरीदृश्यन्ते। एतस्मात् कारणादेकस्मिन् युगे भाषां जातिं वाश्रित्य समाजसंघटनस्य कल्पना निर्मूलैवास्ति।

केवलं वैदिके समाजे एव एवंभूतान्यनेकान्युदाहरणानि सन्ति येषु नानाधर्माणः नानाभाषाभाषिणो वा जनाः सहैव निवसन्। अथर्ववेदे इदं स्पष्टतयोल्लिखितं वर्तते यत् पृथिव्यां नानाभाषाभाषिणो नानाधर्माणश्च जना निवसन्ति।[4] वैदिकर्षिभिर्जीवनानुभवाधारेण स्वप्रातिभेन ज्ञानेन एवंभूतानां सिद्धान्तानां स्थापना कृता ये समाजसंघटनायाधारभूताः सन्ति। ऋग्वेदस्य अन्तिमे सूक्ते जनानां कुटुम्बस्य, समाजस्य, राष्ट्रस्य च सर्वेषामेवैक्यस्य, संघटनस्य च मौलिकानां सिद्धान्तानां सम्यग् विवेचनमक्रियत। अस्मिन् सूक्ते त्रयो मन्त्रा ऐक्यभावनायाः प्रतिपादकाः सन्ति। सामर्थ्यभेदवशादन्यस्माद् वा कस्माच्चित् कारणात् समाजे यदि कश्चिद् दैन्यमुपेतः कश्चिद्वौन्नत्यं तथाप्येते सर्व एव सहैव गच्छेयुः परस्परं सहालापं कुर्युः, देवा इवान्येषां मनोभावाँश्च सम्यगवगच्छेयुः –

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे संजानाना उपासते।।**[5]

अस्मिन् मन्त्रे उपमानरूपेण देवानां कल्पना कृता वर्तते। देवाः परस्परं संजानाना यज्ञेषु स्वमेव भागं यथा गृह्णन्ति नान्येषामेवमेव मानवोऽप्यन्येषां मनांसि संजानानः स्वमेव भागं यदि गृह्णीयाच्चेत् परस्परं संघर्षः परिहृतः स्यात्। एवमेव सूक्तस्यास्य –

---

1. ऋग्वेदः, 1/89
2. ऋग्वेदः, 5/51/15
3. यजुर्वेदः, 19/9
4. जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् अथर्ववेदः, 12/1/45
5. ऋग्वेदः, 10/191/2

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि॥[1]**

इति मन्त्रे ऋषिः प्रतिपादयति यत् सर्वेषां मन्त्र एकः स्यात्, सर्वेषां गतिर्जीवनोद्देश्यं वैकमेव स्यात् सर्वेषां मनश्चित्तञ्च समं स्यात्। अस्मिन्नेव मन्त्रे ऋषिर्विश्वस्य समेषां प्राणिनां कृते समानं मन्त्रम् अभिमन्त्रयते समानेन हविषा च सर्वेषां कृते जुहोति। एवमेव-

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति॥[2]**

इत्यस्मिन् मन्त्रे ऋषिः कल्पयति यत् विश्वस्य सर्वेषां प्राणिनां सङ्कल्प ऐक्यं स्यात्। सर्वेषां हृदयं मनश्च समानं स्यात्। येन सर्वे सहभावेन, समभावेन च स्थिताः स्युः। सर्वोत्तमामुन्नतिञ्च प्राप्नुयुः। सूक्तेऽस्मिन् सुसहसिद्धान्तः सम्प्रतिष्ठापितो वर्तते, यस्यार्थोऽस्ति सुन्दरं सहास्तित्वम्। ऋषिरत्र सु पदम् सहपदस्य विशेषणत्वेन विशिष्टाभिप्रायेण प्रयुङ्क्ते यतोहि सुपदप्रयोगाभावे केवलं सहपदेन एवंभूतानामपि मनुष्याणां समुदायस्य बोधोऽभ्युपेयेत यत्र परस्परं विमतिमतां द्विषतां वा समूहमात्रं स्यात्। एवंभूते समूहे सति परस्परं बाह्यरूपेण प्रेमाभिनयमाचरताम् आन्तरिकरूपेण परस्परं घातयतां जनानां राष्ट्रं नश्येत्। ईदृश्यनर्थपरम्परा न प्रसज्येदिति वैदिकर्षिरादर्शभूतां समाजस्थितिं दृढयितुं सुसहसिद्धान्तस्य प्रतिष्ठामकार्षीत्। तदर्थं सूक्तेऽस्मिन् प्रथमं संगमनसिद्धान्तः परिकल्पितः। मतवैपरीत्ये मनसश्च भिन्नत्वे संगमनं लोके नैव सम्भवति। अतो हेतोः मनसा सङ्गतिरपेक्ष्यते संगमने। कस्याञ्चित् संस्थायां कस्मिँश्चिद् वा समुदाये कर्मशीलानां समेषां मनस ऐक्यपूर्वकं संगमनेन राष्ट्रोन्नतिः सम्भवति। वस्तुतः विभिन्नानि कर्माण्याचरतां जनानाम् एकस्मिन् सूत्रे समावेशः संगमनसिद्धान्तस्य मुख्यं अभिधेयमस्ति।[3] अत्रेदमप्यवधेयमस्ति यत् सृष्टिरियं संगमनेनैव अग्रेसरति।

वैदिके साहित्ये संगमनं न केवलं शारीरिक्याश्चेष्टाया अभिप्रेतं वर्ततेऽपितु तत्र समानख्यानं संवदनं चाप्यभिप्रेतं वर्तते। संवादमाध्यमेन दुष्कराण्यपि कार्याणि सिद्ध्यन्ति। अद्यापि कस्याश्चिदपि समस्यायाः समाधानाय परस्परं संवादोऽपेक्ष्यते। संवादोऽपि तदैव सार्थकः यदा परस्परं सर्वेषां मनांसि संवदेयुः। कर्मणो वाङ्मनसयोश्चेति त्रयाणामेकीभाव एव समाजस्य उन्नतिः सम्भवति अत्रैव वैदिकस्यर्षेस्तात्पर्यम्। मनस्येकं, वचस्येकं, कर्मण्येकं स्यादिति महात्मनां लक्षणम्। वचस्यन्यत्, मनस्यन्यत्, कर्मण्यन्यदिति दुरात्मनां लक्षणम्। किन्तु मनसो वचसः कर्मणश्च संवादेन परस्परं सहयोगभावनया विषमस्यापि समाजस्य उन्नतिः कर्तुं शक्यते। वैदिकानामृषीणामिदं ज्ञातमासीद् यत् सुसंघटितमुन्नतं च समाजं नाशयितुं के के विकारा उत्तरदायिनः सन्ति। ताँश्च विकारान्निवार्य समाजस्य रक्षा कथं क्रियेतेत्येतदर्थम् -

---

1. ऋग्वेदः, 10/191/3
2. ऋग्वेदः, 10/191/4
3. अथर्ववेदः 3/30/7

'उद्बुद्ध्यध्वं समनसः सखायः'[1] इत्येक एवा पन्था अङ्गीकृतः। अस्यायमभिप्रायोऽस्ति यत् समाजे समानमना मानवः परस्परं सख्यभावेन निवसन्नुद्बुद्धः स्वकर्माण्यनुतिष्ठेत्। समाजे सामर्थ्यभेदात् मानवेषु शरीरमनोबुद्ध्यर्थाश्रयेण भेदस्तु स्वाभाविकः किन्तु भेदे सत्यपि समेषां आकूतेः हृदयस्य मनसश्च साम्यस्य प्रार्थना यथात्र दरीदृश्यते तथा विश्वस्मिन् साहित्ये नैव लभ्यते।[2]

भारतीयसमाजव्यवस्थायां कर्मानुसारं ब्रह्मक्षत्रविट्छूद्रेति चत्वारो वर्णाः कल्पिता आसन् किन्तु सर्वेष्वैक्यभावनायाः स्थापनायै ऋषिभिरनेकधा प्रयतितम्। वैदिकर्षिर्या कल्याणीं वाचं जनेभ्यो वदति तामेव ब्रह्मराजन्याभ्यां वैश्याय, शूद्राय स्वाय चारणाय च वदति –

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**
**ब्रह्मराजन्याभ्यां शूद्राय चार्याय चारणाय च॥**[3]

ऋषिणा प्रार्थनाकारि यन्न केवलमात्मीयेषु रुगाधीयतां देवेन किन्तु स सर्वेषु ब्राह्मणक्षत्रियविट्छूद्रेषु रुचमादधातु। अस्यां प्रार्थनायां सर्वेषामेव हितं काङ्क्षितं वर्तते –

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।**
**रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्॥**[4]

न केवलं मानवानां मध्य ऐक्यभावनायाः संस्थापनायै ऋषिभिः प्रयतितमपितु तेषां मते प्राणिमात्रं मित्रदृष्ट्यैवावलोकनीयम् –

**दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।**
**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे॥**[5]

अस्यैवानुवादो दृश्यते गीतायाम् यन्मित्रदृष्ट्यानया संयुक्तान्मानवाल्लोको नोद्विजते योगित्वञ्चास्थितोऽयमपि लोकान्नैवोद्विजते –

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।**[6]

एवं श्रुतिप्रतिपादितया सुसहभावनया मित्रत्वाचरणेन सम्पूर्णे समाजे शान्तिस्तेन च सर्वेषामुन्नतिः सम्भवति।

---

1. ऋग्वेदः, 10/10/1
2. ऋग्वेदः, 10/191/4
3. यजुर्वेदः, 26/2
4. यजुर्वेदः, 18/48
5. यजुर्वेदः 36/18
6. श्रीमद्भगवद्गीता, 12/15

UGC - CARE Listed
जनवरी–मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# समासान्तविषये प्राच्यनव्ययोः मतभेदविचारः

डॉ. अरविन्दमहापात्रः*

पाणिनीयव्याकरणस्य सूत्रार्थविवेचनप्रकारः द्विधा विद्यते, अष्टाध्यायीक्रममनुरुद्ध्य प्रक्रियाक्रमञ्चानुरुद्ध्य। भट्टोजीदीक्षितात् समारभत नव्यव्याकरणस्य विवेचनप्रकारः यस्मिन् न केवलं युक्त्या विरुद्धमतप्रत्याख्यानं लभ्यते, अपि तु शास्त्रानुशीलनपद्धतेः कश्चिदभिनवक्रमः प्रवर्त्तित इव आलभ्यते। सूत्रार्थविवेचनस्य नव्या शैली प्रागलभ्यं प्राप्ता सम्प्रति विद्वत्सु प्रकामं समादरं लब्ध्वा प्राचीनक्रममतिशेते ।

समासान्ताधिकारे पठितानां सूत्राणां दीक्षितेन तथा व्यवस्थापनं कृतं येन तत्तत्समासेन संबद्धानां सूत्राणां तत्तत्प्रकरणसङ्गत्यनुसारं समावेशं स्यात्, येषां येषां समासान्तानां येन न समासेन सम्बद्धः तेषां तत्र तत्र विन्यासः कृतः । ये समासान्ताः समासविशेषमनुरुद्ध्य विहिताः तेषां कृते समासान्तप्रकरणं नामप्रकरणं समासप्रकरणस्यावसाने प्रकल्प्योपन्यासः कृतः। काशिकायां प्रतिसूत्रं यथावृत्ते समुल्लेखः तथा सिद्धान्तकौमुद्यां नास्ति। बहुषु सूत्रेषु वृत्तेरप्यभावः, बहुषु च केवलं विधेयस्यैव समुल्लेखः। मन्ये यत्र सूत्रेषु अनुवृत्त्यादीनामपेक्षा नानुभूताः, अर्थावबोधे न तु वृत्तिसमुपन्यास उपेक्षितः। यत्र वा प्रकरणवशात् विधेयादेः बोधस्य सुतरां सिद्धिः, तत्रापि सूत्रार्थविवरणस्य उपन्यासः नास्ति। तथा हि येषु सूत्रेषु वृत्तिसमुल्लेखो नास्ति तानि इमानि सूत्रार्थविधानेऽपि काशिकाकारस्य भट्टोजीदीक्षितस्य च परस्परं मतभेदः क्वचित् क्वचित् लक्ष्यते। उदाहरणप्रत्युदाहरणविषये, प्रवृत्तेरप्रवृत्तेश्च विषये, अनभिधानविषये च मतभेदः लक्ष्यते।

एवमेव काशिकायाः टीकाकृतोः न्यासपदमञ्जरीकारयोः मिथः मतभेदः दृश्यते। तद्यथा अत्र आदौ काशिकाकारमतम्, तदनु न्यासकारमतम्, अनन्तरं पदमञ्जरी-कारमतमुपन्यस्यते।

**समासान्ताः** इति सूत्रे एते समासान्ताः किं स्वरूपाः इति विषये विचारः दृश्यते। तत्र नव्यानां प्राचीनानाञ्च वैयाकरणानां मतभेदः स्पष्टमनुभूयते। उभययोः मतयो आधारः महाभाष्यस्य वचनमेव। उभे अपि मते बहुविवेचनसाधिते स्तः । उभयोरपि मतयोः एकत्र सङ्केतः प्रौढमनोरमायां मूले उपलभ्यते । तत्र भट्टोजीदीक्षितेन इदमुक्तं यत् – **समासान्तः समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः तेन उपशरदमित्यत्र नाव्ययीभावतोऽम्त्वापञ्चम्या इत्ययं द्विपुरी इत्यादौ द्विगो इति ङीप्**

---

*प्रभातकुमारमहाविद्यालयः, कण्टाइ, पूर्वमेदिनीपुरम्, पश्चिमबङ्गः।
1. प्रौढमनोरमा 5-4-68 ।

**च सिद्ध्यति।**[1] मनोरमायामिमं वाक्यमुपजीव्य उभयोः मतयो आधारविचारं कुर्वन् शब्दरत्नकारः लिखति यत्- **अत्र समासस्य चरमावयवः समसमासान्त इति तन्मतं तत् समासान्ता अन्त इत्यादि सूत्रेषु भाष्ये स्पष्टम्।**[1] इदं नव्यमतम्। **किन्तु समासान्तः समासार्थोत्तरपदस्य चरमावयव**[2] इति पक्षः स्वरूपसूत्रभाष्ये कैयटेन समुद्भावितम् इदं मतं प्राचीनमतम्। शब्दरत्नकारेण प्राचीनमतस्य चिन्त्यतां पुरस्कृत्य इदमुक्तं यत् - **समासपदस्य समासार्थोत्तरपदे लक्षणास्वीकारे किमपि प्रमाणं नास्ति। किञ्च समासार्थवाक्यस्यैव उपचारतः समासपदेन ग्रहणमिति अर्थस्य गोस्त्रियोरुपसर्जनस्य इति भाष्ये उक्तत्वात्। किञ्च अन्तः इति सूत्रस्थ भाष्येणापि उत्तरपदावयवत्वपक्षस्य विरोधाच्च।** एतत् विवरणेन इदमायातं यत् शब्दरत्नकारस्यापि समासचरमावयवत्वपक्ष एव सम्मतः। एतेन इदमप्युक्तं यत् स्वरूपसूत्रस्थभाष्यमपि नव्यमतानुगुण्येन सुयोजयितुं शक्यत इति समासावयवत्वपक्षस्वीकारेऽपि स्वरूपसूत्रस्थभाष्येण विरोधो न भवतीति तस्य तात्पर्यम्।

शब्दरत्नकारस्येदं मतं यत् न केवलं ममैव अपि तु मनोरमाकारस्यापि नव्यमते अभिसन्धिः। अतो हेतोः दीक्षितेनाद्यपक्षमनुकूलतया विभाव्य फलद्वयं प्रदर्शितम्, अर्थात् उपशरदमित्यत्र **नाव्ययीभावादिति** सूत्रेण टजन्तस्यादन्ताव्ययीभावत्वप्रयुक्तोऽम् सिद्ध्यति। किञ्च द्विपुरी इत्यत्र **ऋक्पूरब्धूपथामानक्षे** इत्यनेन अप्रत्ययान्तस्य द्विपूरशब्दस्य अदन्तत्वप्रयुक्त ङीप् च सिद्धः। यद्यत्र आशङ्क्येत यत् - द्विपूरी इत्यादौ अकारान्तोत्तर-पदत्वं नास्ति, अतः तद्भावे **अकारान्तोत्तरपदद्विगुस्त्रियामिष्ट** इति वचनेन स्त्रीत्वं कथं सम्भवेदिति ? तन्न समुचितम्, यतः लिङ्गानुशासनसूत्राणि केवलं सिद्धलिङ्गानुशासनानामनुवादं कुर्वन्ति न तु विधानम् । अत अत्रत्यद्विगुसमासे तेन स्त्रित्वाभावस्य नियमनं कर्तुं न शक्यते।[4] अतो हेतोः समासान्ताः इत्यादिसूत्रभाष्ये लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य इत्युक्तम् दृश्यते।[5] यद्यत्र एवमुच्यते यत् समासान्तानां समासार्थोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेन उपशरदम्, द्विपूरी इति प्रयोगयोः सिद्धिः सम्भवतीति। किन्तु तन्न युक्तम्, यतः उत्तरपदावयवत्वस्वीकारे अन्तः इति सूत्रस्थभाष्यविरोधात्। स एव विरोध एवं विवरयितुं शक्यते - **अन्तः इति सूत्रे भाष्यकारेणेदं विचारितं यत् समासान्तोदात्तत्वं भवतु उत्तरपदस्य अन्तोदात्तत्वं वेति विकल्पे अयं विचारः कृतः यत् - यदि समासस्य अन्तोदात्त्वं स्वीक्रियते तदा इयं प्रथमका इत्यादौ कप अन्तोदात्त्वस्यासिद्धिः स्यात्, एवं तात्पर्यकेन भाष्येण विरोधो माभूत्। अतः उत्तरपदावयवत्वपक्षः न स्वीकर्तुं शक्यते इत्युक्त्वा शब्दरत्नकारेण स्वविचारः उपसंहृतः।**[6]

1. तत्रैव शब्दरत्नकारः।
2. स्वरूपसूत्रे भाष्ये कैयटः।
3. समासान्ताः सूत्रे शब्दरत्नकारः।
4. समासान्ताः सूत्रे प्रौढमनोरमाकारः।
5. समासान्ताः सूत्रे भाष्ये।
6. समासान्ताः सूत्रे शब्दरत्नकारः।

**कैयटेन तु गोस्त्रियोपसर्जनस्य इति सूत्रे समासपदस्य समासार्थविग्रह-वाक्यस्थोत्तरपदलक्षणोत्तरपदावयवत्वम् उक्तम्।**[1] तथा च तेन स्वरूपसूत्रभाष्ये इदमुक्तं यत् उत्तरपदावयवत्वमित्यपि भाष्यकारस्य मतमिति। प्राचीनमतस्यैव संक्षेपेण विवेचयितुं शक्यते। समासार्थलौकिकविग्रहवाक्यघटकोत्तरपदावयवाः समासान्ताः। अत एव स्वरूपसूत्रभाष्ये कृतद्वन्द्वानां विभक्तौ परत एकशेषेतिपक्षे ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोतीत्युक्तिः सङ्गच्छते। ऋच्छब्दयोः द्वन्द्वे कृते ऋक्पूरब्धूः फथामानक्षे इत्यप्रत्यये ऋच् ऋच् औ इत्यवस्थायामसारूप्यादेकशेषो न स्यादिति भाष्यार्थः।[2] समासावयवत्वे द्वयोः शब्दयोः सारूप्यसत्त्वेन असारूप्यादेकशेषो न प्राप्नोति इति भाष्यासङ्गतिः स्पष्टैवेत्याहसमासार्थोत्तरपदस्य वा चरमावयव इति। अत एव द्विधूरी, द्विपूरी इत्यादि सिद्धयति। **समासावयवत्वे तु उत्तरपदस्यादन्तत्वाभावात् अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः इत्यस्याप्रापत्या स्त्रीत्वं न स्यात् न च समासान्तानामुत्तरपदावयवत्वे उपशरदमित्यत्र अव्ययीभावस्यादन्तत्वाभावेन नाव्ययीभावादतोऽम्त्वपञ्चम्याः इत्यमादेशानापत्तिः अवयावयवसमुदायावयव इति न्यायेनाव्ययीभावस्याप्यदन्तत्वेन तदसिद्धिरिति प्राञ्चः।**[3]

नव्यानां मतानुसारं समासान्ताः इत्यस्य समासस्य चरमावयवा इत्यर्थः। तत्र समासपदं तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरम्। एवमव्ययीभावादिपदान्यपि तत्सम्बन्ध्यलौकिकविग्रहवाक्यपराण्येव। एवञ्च समासार्थलौकिकविग्रहवाक्यान्तावयवा इति फलति। तेन बहुकुमारिक इत्यत्र गोस्त्रियोरिति ह्रस्वो न, समासात् प्राक् तत्समकालं वा समुदायस्याप्रातिपदिकत्वेन उपसर्जनं यो गोशब्दःस्त्रिप्रत्ययान्तञ्च तदन्तसमासाण्णिजन्त-प्रातिपदिकस्य ह्रस्वेत्यर्थकस्याप्राप्तेः कपि कृते स्त्रीप्रत्ययान्तत्वाभावात्। तदुक्तं भाष्ये – **कपि ह्रस्वस्य प्रतिषेधो वक्तव्यः, बहुकुमारीकः न वक्तव्यः कपि कृतेऽनन्त्यत्वादध्रस्वत्वं न भविष्यति, इदमिह सम्प्रधार्य कप् क्रियतां ह्रस्वत्वमिति, परत्त् कप्, ननु चायं कप्समासान्त इत्युच्यते, तादर्थ्यात्ताच्छब्दं भविष्यति, येषां पदानां समासो न तावत् तेषाम् अन्यद् भवति कपं तावत् प्रतीक्षते इति।**[4]

अन्तः इति सूत्रे भाष्ये च किं समासस्यान्त उदात्तः, आहोस्विदुत्तरपदस्य, आद्ये इदम्प्रथमका इत्यादौ कपि पूर्वपदस्योपसंख्यानङ्कर्त्तव्यम्। अन्त्ये अनृचः इत्यादौ नञ्सुभ्याम्... त्यनेनान्त्याकारस्योदात्तत्वापत्तिः इत्युक्तम्। यदि समासे कृते समासान्तः प्रवर्त्तते तदा इदम्प्रथमका इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् बहुव्रीह्याविदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्पष्टैव।[5]

---

1. काशिका 1-2-48 ।
2. 5।-4-74 सूत्रे भाष्ये
3. प्रौ,म. 5-4-68 ।
4. तत्रैव।
5. तत्रैव।

समासान्ताः इत्यत्र तादर्थ्यात्ताच्छब्दः इति भाष्यप्रमाणात् समासपदस्य समासार्थालौकिकविग्रहवाक्ये लाक्षणिकतया समुदायचरमावयवत्वमेव। अत एव अन्त इति सूत्रे भाष्ये समासस्यान्तोदात्तत्वापत्तिमुक्त्वाऽन्त्ये अनृचः इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा लक्ष्यानुरोधात्क्वचिदुत्तरपदान्तोदात्तत्वं क्वचित्समासान्तोदात्तत्वमित्युक्तिः सङ्गच्छते। द्विपूरीत्यादौ समुदायस्य स्त्रीत्वन्तु लिङ्गमशिष्यं लोकाश्रयत्वात् लोकसिद्धलिङ्गानुवाल्लिङ्गस्य इति समासान्ताः सूत्रभाष्योक्त्या लिङ्गानुशासनस्यानुवादकत्वेन लोकादेव सिद्धेः। अत एव परवल्लिङ्गमिति सूत्रसत्त्वेऽपि द्विनावम्, अर्धखारम् इत्यत्र नपुंसकत्वस्य सिद्धिः। अत एव अकारान्तोत्तरपदोद्विगुः स्त्रियामिष्टः इत्यत्र उत्तरपदग्रहणस्य पञ्चराजमित्यादौ स्त्रित्वाभावरूपं फलं सङ्गच्छते। अतः उपशरदम् इत्यत्र नाव्ययीभावादिति अम्, अव्ययानां भमात्रे इति टिलोपाभावश्च सिद्धः। पूर्वभाष्याव्ययीभावत्वाभावेनानव्ययत्वात्। न च समुदायावयवत्वे स्वरूपसूत्रस्थभाष्यविरोधः। समुदायावयवत्वेऽपि तद्भाष्यविरोधाभावात्। तथा हि ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषः न प्राप्नोति इति भाष्यम्। विभक्तौ परतः कृतद्वन्द्वानामेकशेष इति पक्षे समासान्तप्राग्भागस्य विभक्त्यव्यवहितपूर्वत्वाभावः। तद्विशिष्टस्य तु न स्वरूपमित्युक्तम् भाष्ये असारूप्यादिति। किञ्चोत्तरपदावयवत्वे समासान्ताः इत्यत्र समासपदस्य समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदे लक्षणायां लक्ष्यतावच्छेदके गौरवञ्चेत्याहुः। अन्ये तु ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति इति भाष्ये एकशेषप्राप्तौ ऋच इत्यस्यानर्थकत्वरूपहेतोरनुक्त्वोत्तरपदावयवत्वमेव, अन्यथा भाष्यस्य न्युतापत्तिः। उत्तरपदावयवत्वे तु ऋच इत्यत्रार्थवत्वस्यैव सत्वेन न्यूनत्वाभावः न च विशिष्टरूपोपादानाभावेन अर्थवद्ग्रहणे इति परिभाषाया अप्राप्त्या स्वरूपमिति सूत्रेणार्थवता एकशेष इत्यत्र प्रमाणाभावः, सहविवक्षायामेवैकशेषस्य प्रमाणसिद्धत्वेन समुदितार्थविषयकबोधतात्पर्यणोच्चरितानां स्वरूपाणामेवैकशेषोद्देश्यता-वच्छेदकाक्रान्ततयार्थवत्वाभावे च तद्व्याप्यस्य समुदितार्थबोधकत्वरूपाण्यप्यधर्मेण हेतुना व्यापकस्यावयवार्थवत्वस्यानुमानेन तस्यैव प्रमाणत्वात्। अत एव काक्ष इति बहुव्रीहौ कापथ्यक्षया इत्यनेन षच्प्रत्ययान्तस्यार्थवत्वेन कादेशः सिद्ध्यति, समुदायावयवत्वे तु अक्षशब्दस्यानर्थकतया कादेशानापत्तिः। न च प्रतिपदोक्तपरिभाषया कुगतिप्रादय इति विहितसमासे एव कोः तत्पुरुषेऽचि इत्यस्य प्रवृत्त्या समासान्तरे दोषाभावेन तत्पुरुषे इत्यस्य चरतार्थ्यायात्र प्रकरणे प्रतिपदोक्तपरिभाषायाः प्रवृत्तिकल्पनात्। उत्तरपदावयवत्वादेव अन्तरीयमित्यत्र द्व्यन्तरूपोपसर्गेभ्योऽपि ईत् इत्यनेनार्थवदपशब्दमादाय ईदादेशः सिद्ध्यति। ईद्विधानसामर्थ्यादर्थवत्परिभाषाया अपरवृत्तिकल्पनन्तु न युक्तम्। सामर्थ्यात् प्रवृत्तिकल्पनापे- क्षयोत्तरपदावयवत्वस्वीकारस्यैवौचित्यादिति वदन्ति।[1]

अत्र समासान्तानां समासावयवत्वमेव इति सभापतिशर्मोपाध्यायानामपि मतम्। तन्मतानुसारम् अन्तः इति सूत्रे भाष्ये उत्तरपदस्यान्तोदात्तत्वपक्षे अनृचः इत्यत्र

1. प्रौ.म. 5-4-68 ।

अन्तोदात्तत्वस्य असिद्धिरूपो दोषः तत्रोक्तः। यदि समासान्तानां समासावयवत्वं न स्वीक्रियते उत्तरपदावयवत्वे च शब्दाकारस्य उत्तरपदावयवतया उदात्तत्वं सिद्ध्यति । तेन प्रोक्तभाष्यस्यासङ्गतिः स्यात्। द्वितीयविचारं प्रस्तुवन्तः ते आहुः यत्- उत्तरपदावयवत्वे सति अकारान्तोत्तरपदो द्विगुस्त्रियामिष्टः इति वार्तिके उत्तरपदग्रहणस्येदमेव फलं यत् पञ्चराजमित्यत्र स्त्रित्वाभावस्य वारणं भवितुं शक्यते, अतः तत्सत्त्वेऽपि स्वरूपाणामेकशेष एकविभक्तौ इति सूत्रभाष्यस्यासङ्गति अनिवार्य स्यात्। ऋक् च ऋक् च इति ऋचौ इत्यत्र विरूपाणामपि समर्थनामितिवचनेन एकशेषः सिद्ध्यति । अतः भाष्यकारेण यदुक्तम् एकशेषानापत्तिः तत् आपत्तिरूपदोषस्यासङ्गतिः स्यात्। यदि समासान्तानां समुदायावयवत्वं स्वीक्रियते तदा ऋचः इत्यस्यानर्थकतया विरूपाणामपि समर्थानामिति वचनस्य प्राप्तिरेव नास्ति, अतो हेतोः असङ्गतेरापत्तिः नोदेति। अपरं तथ्यं समुद्घाटयन्तः ते इत्थं कथयन्ति यत्- स्वरूपाणामेकशेष एकविभक्तौ इत्यनेन अर्थवत्तामेव एकशेष इत्यत्र किमपि प्रमाणं नास्ति, यतः व्याप्यत्वेन समुदितार्थवत्वेन अवयवार्थत्वस्य विद्यमानेऽपि अनुमितस्य तस्य स्वरूपाणामितिवाक्यार्थे प्रवेशः न सम्भवति। अतः अनर्थवतामेवैकशेष इति वक्तुं न शक्यते। यदि एवम् अनर्थकस्यापि एकशेषः स्वीक्रियते तदा तेन अर्थबोधो न स्यादिति वक्तुं न शक्यते। यतः यः शिष्यते सः लुप्यमानार्थाभिधायीतिन्यायेन तद्बोधकत्वमुपपद्यत एव इति।[1]

नागेशभट्टस्तु एवं सिद्धान्तयति यत् - अलौकिकविग्रहवाक्ये समास-संज्ञासमकालमेव समासान्ताः भवन्तीति। यदि पूर्वं समासान्ते तत्सन्नियोगशिष्टात् आद्युदात्तत्वे तदैव वाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्य उदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरस्याप्रवृत्तौ टचश्चित्करणं व्यर्थमिति वक्तुं न शक्यते। यतः टचश्चित्करण-सामर्थ्येन समासान्तविधौ आद्युदात्तश्च इति न सम्बन्ध्यते इति ज्ञाप्यते, अस्मादेव हेतोः **समृद्धापूर्यस्य समृद्धपुरो राजा इत्यादौ पूर्वपदप्रकृतिस्वरः सिद्ध्यति।[2]**

नागेशभट्टेनेदमप्युक्तं यत् द्वित्रिभ्यामिति सूत्रस्थं भाष्यमेकदेशि एव। यस्मिन्निदमुक्तं यत् समासे कृते समासान्ताः भवन्ति। नागेशभट्टेन समासान्तः कुत्र प्रवर्तते इति विषये नैजं मतं एवम् उट्टङ्क्यते यत्- स च समासान्तः बहु जस् गोमत् जस् इत्यवस्थायाम् अलौकिकविग्रहवाक्ये सुपः परत्वादेव भवति। यदि ततः पूर्वं समासान्तः प्रवर्त्तेत तदा वाच्यार्थविरोधः स्यात्, यतो हि सुप्रतिहतसमासार्थं नोपलभ्यते किन्तु तद्विशिष्टमेव। यद्यत्र एवमाशङ्क्येत यत् - तद्विशिष्टमेव समासार्थं स्वीक्रियेत तदा सुबन्तत्वाभावेन सुबन्तात् तद्धित इति सिद्धान्तविरोधः प्राप्नोति इति वक्तुं न शक्यते। यतः तेषामर्थाभावेन परिपूर्ण-पदमितितन्मूलभूतन्यायस्यात्र विषयः नास्ति, अस्मादेव हेतोः पुंयोगादाख्यायामिति सूत्रे भाष्ये इदमुक्तं यत्- अत्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागेव उत्पत्तिः भवति। नागेशेनात्र

1. प्रौ,म. 5-4-68 ।
2. 5-4-68 सूत्रे शेखरः ।

विषये विचारान्तरमेवमुक्तम् यत्- समासान्तप्रकरणे ङ्याप्कृसूत्रस्यापि सम्बन्धः नास्ति, यतः तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वमेव नास्ति, सुबुत्पत्तिकाले एव विरोधाभावात् तत्पूर्वभागस्य समाससंज्ञा जायते। समासान्तस्य च तद्वाक्यावयवत्वेन समासग्रहणएन समासान्तस्य ग्रहणात् बहुकुमारीक इत्यादौ उपसर्जनस्त्रीप्रत्ययान्तस्य प्रातपदिकत्वाभावात् ह्रस्वत्वं न भवति । कप्प्रत्ययस्तु ह्रस्वादन्तरङ्गतरः वर्त्तते। तादर्थ्यात् ताच्छब्द्यं येषां पदानां समासः न तावत्तेषामन्यद् भवति, कपं तावत्प्रतिक्षते इति भाष्येण एवंभूतार्थस्य स्पष्टमभिधानं दृश्यते। एवं बहुविधाः विचाराः समासान्तमुद्दिश्य नागेशेन प्रवर्त्तिताः।[1]

सङ्क्षेपतोऽत्र समासान्तस्वरूपमालक्ष्य कैयटमतं प्राचीनं दीक्षितादेः मतं नवीनमिति वक्तुं शक्यते। उभययोरपि विचारयोः भाषायालोडनं दृश्यते।

1. तत्रैव ।

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45,प्रथमोऽङ्कः

# सूत्रभेदकोटिषु परिभाषावचनानि : एकमध्ययनम्

डॉ. गिरीधारीपण्डा*

**कूटशब्दाः** – सूत्रम्, सूत्रस्वरूपम्, सूत्रभेदः, परिभाषावचनानि।

**शोधसारः** – शब्दानुशासनं नाम व्याकरणम्, यत्र साधुशब्दानाम् असाधुशब्दानां च वैधानिकी विचारधारा प्रवर्तते। शब्दानुशासने व्याकरणे वा प्रतिपादितायामेतस्यां विचारधारायां यत् अलौकिकम् अनन्यम् अनुपमम् उपायं साधयति, स्वल्पीयसा आयासेन अल्पीयसा कालेन च याथार्थ्यं प्रतिपादयति। व्याकरणपरिभाषायां तत् सूत्रम्' इति पदेनाभिधीयते, येन माध्यमेन शब्दानुशासनं व्याकरणं वा पूर्णाङ्गं लभते। तत्र शब्दानुशासने अवलम्बितं सर्व वैज्ञानिकं तत्त्वं सूत्रमाध्यमेनैव परिष्कृतं जायते। 'सूत्रम्' इति पदस्योपादानं सर्वथा लघ्वर्थं हि उद्देश्यम्। सूत्रे अल्पाक्षरेण समन्वितेन पदेन बहुविधस्य तात्पर्यस्य उपस्थापनं कर्त्तव्यं जायते इति सूत्रलक्षणात् तस्मात् प्रतिपाद्यते। एतस्मिन् विधौ सूत्रेषु कार्यानुसारं कार्यविधेः प्रतिपादनानुसारं च षड्विधप्रकारभेदव्यवस्था कल्पनीया विद्यते। संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारश्चेति भावेन षड्विधेषु सूत्रप्रकारकोटिषु परिभाषासूत्राणि, सूत्राणां तात्पर्यप्रतिपत्तये समुद्दिष्टानि परिभाषावचनानि च पाणिनीयव्याकरणे अनियमस्थले नियममुपपाद्य सूत्रोपातपदानां गोपायितं रहस्यमुद्घाटयन्ति, शास्त्रीयप्रक्रियानिर्वाहञ्च साधयन्ति। परिशीलनेन परिगणनेन च ज्ञायते यत् पञ्चाशत् संख्यकानि परिभाषासूत्राणि अष्टाध्यायीग्रन्थविमण्डितानि भवन्ति। एवञ्च ५५० संख्यकानि परिभाषावचनानि व्याडति आरभ्य शेषाद्रिसुधि इति यावत् प्रतिनिबद्धानि वर्त्तन्ते। तेषां सर्वेषां सूत्राणां वचनानाञ्च समूहितेन मार्गेण व्याकरणजगति सूत्रात्मकस्वरूपस्य सूत्रतथ्यस्य च परिष्कारात्मकं परिशीलनं पर्य्यालोचनञ्चावधातव्यं जायते। 'अगत्या हि परिभाषाऽऽश्रीयन्ते' इति शास्त्रकृतां वचनात् शास्त्रीयरहस्यस्य पदसाधुत्वोपायस्य च झटिति प्रतिपत्तये परिभाषाणामुपयोगित्वं सर्वथाऽनस्वीकार्यम्। पर्यालोचनेन प्रतिभातं जायते यत् अल्पाक्षरमिति सूत्रस्वरूपवत् कार्यकालसंज्ञापरिभाषमिति भावेन परिभाषावचनान्यपि ग्रथितानि विद्यन्ते। सूत्रसंघटनोपाये पाणिनिना यत् कौशलमवलम्बितं तदपि अत्राश्रितं दृश्यते। पुनश्च संज्ञा-परिभाषा-विधिर्नियम..' इति षड्विधेषु सूत्रभेदकोटिष्वपि संज्ञापरिभाषादिवत् परिभाषावचनं संघटितं विद्यते। अत्रेदमेव तात्पर्यं यत् 'तत्र च नामकरणं संज्ञा', **'अनियमे**

* संस्कृतविभागाध्यक्षः, मेदिनीपुरमहाविद्यालयः पश्चिमबङ्गप्रदेशः
(UG & PG ) Midnapore College (Autonomous)

**नियमकारिणी परिभाषा**[1], **'कर्त्तव्यत्वेनोपदेशो विधिः'**[2], **'बहुत्र प्राप्तौ संकोचनं नियमः'**[3] इत्यादिलक्षणमुररीकृत्य प्रथितानि सूत्राणीव परिभाषावचनानि ग्रथितानि विद्यन्ते। एकेनैवोपस्थापनेनालं यत् संज्ञासूत्रवदत्रापि समानाधिकरणमादाय परिभाषावचनं प्रथितं विद्यते। तद्यथा- यथोद्देशं संज्ञापरिभाषम् (प. सं. २) , अनेकान्ता अनुबन्धा (प. सं. ४)। अकृतव्यूहाः पाणिनीयाः (प. सं. ५६) इत्यादीनि । एवंभावेन यथोद्देशं संज्ञापरिभाषाम्, ज्ञापकसिद्धं न सर्वत्र कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते (प.सं. १०), संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति (प. सं. २७), **'एकदेशविकृतमनन्यवत्'**[4] इत्यादिभावेन क्रमेण संज्ञा-परिभाषा-विधि-नियम-अतिदेशादिषु सूत्रभेदकोटिषु बहूनि परिभाषावचनानि संघटितानि विद्यन्ते, यानि सूत्राणां रहस्यावबोधनाय तत्तत्कार्यप्रकारकोटिष्वपि स्वकीयं तात्पर्यमावहन्ति। अतः तेषां परिभाषावचनानामेकत्रीकृत्य परिभाषायाः सूत्रस्वरूपम्, परिभाषायाः संज्ञास्वरूपम् , परिभाषायाः परिभाषात्वम् , परिभाषायाः विधित्वम्, परिभाषायाः नियमत्वम्, परिभाषायाः अतिदेशत्वम्, परिभाषायाः अधिकारत्वम् इत्यादिभिः बिन्दुभिः शोधनिबन्धोऽयं पल्लवितः।

**भूमिका -**

निखिलेऽस्मिन् वाङ्मये अभिव्यक्तिसाधने उपदिश्यमानेषु उपायविशेषेषु सर्वोत्कृष्टा सुस्पष्टा समृद्धा च माध्यमविशेषा भाषा इत्यामनन्ति भाषाविज्ञानविदः। माध्यमभूतायाः अस्याः भाषायाः परिधौ ये निवसन्ति ते सर्वे परस्परमवगन्तुं समर्थाः भविष्यन्ति। विभिन्नेन कारणेन कौशलस्य व्यतिक्रमेण वा विच्युतिं प्राप्य शब्दः ध्वनिविज्ञानात्मिकां शय्यामवलम्ब्य भाषारूपेण प्रयोगक्षमा भवति। इदमेव विचारणेनालं यत् प्रवहन्त्याः भाषायाः विकसनं संकोचनं विलोपनमित्यादीनि प्रक्रियात्मकानि कार्याणि सरितां शय्यावदाकल्यन्ते। कस्मिश्चिदुपाये अवसरे वा इमानि कार्याणि प्रकल्पन्ते प्रवर्त्तन्ते च अन्यथा तन्निर्णेतुम् अवबोधयितुं प्रयोक्तुं वा न शक्यते। अतएव एकस्मिन् अनुशासने बन्धने नियमेन तस्याः किल भाषायाः परीक्षणमपेक्ष्यते, यत् खलु शब्दमर्य्यादया शब्दानुशासनमिति व्यवहारं लभते।

एतस्मिन् विधौ पदानां प्रयोगार्हभूतानां च कृते एकं सङ्घटनं सजातीयतामादाय संस्थाप्यते। तत्र प्रयोगविज्ञाने स्वरूपं विचार्य समानतायां क्रियायाः अवलम्बनं विधीयते। शब्दस्य मूलप्रकृतौ कस्मिन् भागे विकाशः विकारः विश्लेषणं वा अवधार्यते तत् विचार्य सम्पद्यमानायां क्रियायां समानता अवलम्ब्यते। एवं च किमात्मकं कार्यं तस्य स्वरूपं वा इति विचारपुरस्सरं कार्यविधानं साधनं वा निरूप्यते उपदिश्यते च। तत्र पुनः शब्दानुशासने शब्दोपपादनप्रसङ्गे च

1. सि.कौ. - पृ.७
2. सि.कौ. - पृ.७
3. सि.कौ. - पृ.७
4. प.सं. ३७

शब्दोपदेशे प्रकृतिनिर्देशे च संक्षिप्तानुशीलनेन सर्वथा अवधार्यते। इदं तत्र अवधेयं यत् समानरूपस्य क्रियमाणस्य कार्यस्य कृते यत्र व्यतिक्रमः लक्ष्यते तदेवोपस्थाप्यते। किमात्मकस्य व्यतिक्रमः, तदपि अवधार्यते। कार्ये कुत्र निषेधः, कुत्र विकल्पः कुत्र वा उभयविध इति सर्व निर्दिश्यते। सूत्रे अल्पाक्षरेण समन्वितेन पदेन बहुविधस्य तात्पर्यस्य उपस्थापनं कर्त्तव्यं जायते इति सूत्रलक्षणात् तस्मात् प्रतिपाद्यते। तथा हि-

**१. अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्र विदोविदुः।।[1]**
**२. लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वत सारभूतानि सूत्राण्याहुः मनीषिणः।[2]**

महर्षिवररुचिना किमपि परिवर्तनं विधाय उपस्थापितम् -

**अल्पाक्षरमसन्दिग्धं सारवत् गूढनिर्णयम्।**
**निर्दोषं हेतुमत्त्वं च सूत्रमित्युच्यते बुधैः।।[3]**

सूचनाकारिग्रन्थे सूत्रशब्दस्य व्यवहारः दृश्यते। अतः अनेकार्थसंग्रहकोशे लिखितं यत् 'सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्था'[4] इति। हैमेऽपि एतद्विधं विवेचनं स्वीकृतम्। नागेशः[5] मतमिदं स्वीकरोति। तद्वचनेन सूत्रशब्देन अष्टाध्यायी एव तदेकदेशेषु भोगव्यवहारः। कालिदासेन रघुवंशे तस्य साहित्यिकः अर्थो व्युत्पादितः। यथोक्तं तत्र-'मनोवज्रासमुत्कीर्णे सूत्रस्यैवास्ति मे गतिः।'[6] राजशेखरेणोक्तं यत् - 'अल्पार्थशाखाधीतमन्त्राणां विनियोजनं येन क्रियते, तत् सूत्रमित्युच्यते।'[7] गोल्डष्टुकरमहोदयाः सम्पूर्णसंग्रहरूपे अर्थे अस्य प्रतिपादनमभिलषितः।

सूत्रेषु कार्यानुसारं कार्यविधेः प्रतिपादनानुसारं च षड्विधप्रकारभेदव्यवस्था कल्पनीया विद्यते। संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारश्चेति भावेन, यथोक्तं-

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।[8]**

विषयस्यास्योपस्थापनमधः प्रस्तूयते।

**१. परिभाषायाः सूत्रस्वरूपम् -**

**'अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्।'**

---

1. उद्धृत. वायुपुराणम्-४९/१४२
2. उद्धृत. वै. सू.-१/१/१
3. वाररूचसंग्रह :- १.१.१
4. अनेकार्थसग्रहकोशः पृ. ३९
5. महाभाष्यम् उद्योत २.१८१
6. कालिदासप्रणीतं रघुवंशम्- १/४
7. मन्त्राणां विनियोजकं सूत्रकल्प-अ.१
8. उद्धृत. सि.कौ.

लघूनि सूचितार्थानि वेति तल्लक्षणात् सूत्रसङ्घटनं सर्वथा अल्पाक्षरेण भवितव्यम्। पुनश्च पाणिनीयविधौ संज्ञापरिभाषादिभेदेन तेषां विभागोऽपि लक्षितो विद्यते। अनेकानि परिभाषावचनानि विद्यन्ते यानि अल्पाक्षरैः संयुक्तानि विद्यन्ते। तद्यथा-

**१. कार्यकालसंज्ञापरिभाषाम् ( प. सं. २ )**

**२. परात् नित्यं बलवत् ( प. सं. ४२ )**

**३. चानुकृष्टं तोत्तरत्र ( प. सं. ७९ ) इत्यादीनि।**

सूत्रसंघटनोपाये पाणिनिना यत् कौशलमवलम्बितं तदपि अत्राश्रितं दृश्यते। अवधीयते सूत्रकारपाणिनिः तस्मिन्काले प्रथितां सूत्रशैलीमनुकृत्येत्थं प्रतिपादयितुमिच्छति यत् संघटितानि पदानि वा गुरुलघुविचारपुरस्सरं क्रमशः गुरुतां प्राप्य ततश्च लघुतां यान्ति। आहोस्वित् लघुतां प्राप्य क्रमशः गुरुतां यान्ति। संज्ञापरिभाषादिवत् परिभाषावचनं सङ्घटितं विद्यते।

**२. परिभाषायाः संज्ञास्वरूपम् -**

**'तत्र च नामकरणं संज्ञा'**[1] संज्ञा-सूत्राणां सूत्रोपात्तपारिभाषिकपदानामुपादाने वृद्धि-गुण-प्रत्याहार-विभाषा-सवर्णेत्यादिभावेन प्रसिद्धिः। प्रायतः संज्ञासूत्रसहकारेण विधि सूत्राणां प्रवृत्तिर्जायते। यथा- 'अदेङ्गुणः'[2] इति गुणसंज्ञा-विधायक-सूत्रमाध्यमेन 'आद्गुणः'[3] इति विधिसूत्रस्य कार्यं विधीयते। संज्ञाशास्त्रेषु संज्ञासंज्ञिभावपुरस्सरं समानाधिकरणं वर्तते। एतद्विषये अपि बहुवैचित्र्यं भाष्यकृता प्रदर्शितम्- अनाकृतिः संज्ञा, आवर्तिन्यः संज्ञा, संज्ञाधिकारे पठितत्वं संज्ञात्वमित्यादीनि। यदस्तु संज्ञासूत्रवदत्रापि समानाधिकरणमादाय परिभाषावचनं प्रथितं विद्यते। तथाहि-

१. यथोद्देशं संज्ञापरिभाषाम् (प. सं. २)

२. अनेकान्ता अनुबन्धा (प. सं. ४)

3. अकृतव्यूहाः पाणिनीयाः (प. सं. 56)

४. समासान्तविधिरनित्यः (प. सं ८५)

संज्ञासंज्ञिभाव अत्र न भवति। किन्तु तद्वत् सामानाधिकरणता अनुकृता विद्यते।

**३.परिभाषायाः परिभाषात्वम्-**

'अनियमे नियमकारिणी परिभाषा।'[4] परितो भाषन्ते इति परिभाषा। अष्टाध्याय्यां पाणिनिप्रोक्तानि पञ्चाशत्संख्यकानि परिभाषासूत्राणि सन्ति, येषामुपयोगित्वं केवलमष्टाध्यायीस्थ- विधिसूत्राणां प्रवृत्तिसाधनमुद्देश्यम्। 'तस्मिन्निति निर्दिष्टे पूर्वस्य'[5]

---

1. सि.कौ-पृ.७
2. पा.सू.-१.१.२
3. पा.सू.- ६.१.८७
4. सि.कौ. - पृ.७
5. पा.सू.- १.१.६६

अन्तोदात्तत्वस्य असिद्धिरूपो दोषः तत्रोक्तः। यदि समासान्तानां समासावयवत्वं न स्वीक्रियते उत्तरपदावयवत्वे च शब्दाकारस्य उत्तरपदावयवतया उदात्तत्वं सिद्ध्यति । तेन प्रोक्तभाष्यस्यासङ्गतिः स्यात्। द्वितीयविचारं प्रस्तुवन्तः ते आहुः यत्- उत्तरपदावयवत्वे सति अकारान्तोत्तरपदो द्विगुस्त्रियामिष्टः इति वार्त्तिके उत्तरपदग्रहणस्येदमेव फलं यत् पञ्चराजमित्यत्र स्त्रित्वाभावस्य वारणं भवितुं शक्यते, अतः तत्सत्त्वेऽपि स्वरूपाणामेकशेष एकविभक्तौ इति सूत्रभाष्यस्यासङ्गति अनिवार्य स्यात्। ऋक् च ऋक् च इति ऋचौ इत्यत्र विरूपाणामपि समर्थनामितिवचनेन एकशेषः सिद्ध्यति । अतः भाष्यकारेण यदुक्तम् एकशेषानापत्तिः तत् आपत्तिरूपदोषस्यासङ्गतिः स्यात्। यदि समासान्तानां समुदायावयवत्वं स्वीक्रियते तदा ऋचः इत्यस्यानर्थकतया विरूपाणामपि समर्थानामिति वचनस्य प्राप्तिरेव नास्ति, अतो हेतोः असङ्गतेरापत्तिः नोदेति। अपरं तथ्यं समुद्घाटयन्तः ते इत्थं कथयन्ति यत्- स्वरूपाणामेकशेष एकविभक्तौ इत्यनेन अर्थवत्तामेव एकशेष इत्यत्र किमपि प्रमाणं नास्ति, यतः व्याप्यत्वेन समुदितार्थवत्वेन अवयवार्थत्वस्य विद्यमानेऽपि अनुमितस्य तस्य स्वरूपाणामितिवाक्यार्थे प्रवेशः न सम्भवति। अतः अनर्थवतामेवैकशेष इति वक्तुं न शक्यते। यदि एवम् अनर्थकस्यापि एकशेषः स्वीक्रियते तदा तेन अर्थबोधो न स्यादिति वक्तुं न शक्यते। यतः यः शिष्यते सः लुप्यमानार्थाभिधायीतिन्यायेन तद्बोधकत्वमुपपद्यत एव इति।[1]

नागेशभट्टस्तु एवं सिद्धान्तयति यत् - अलौकिकविग्रहवाक्ये समास-संज्ञासमकालमेव समासान्ताः भवन्तीति। यदि पूर्व समासान्ते तत्सन्नियोगशिष्टात् आद्युदात्तत्वे तदैव वाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्य उदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरस्याप्रवृत्तौ टचश्चित्करणं व्यर्थमिति वक्तुं न शक्यते। यतः टचश्चित्करण-सामर्थ्येन समासान्तविधौ आद्युदात्तश्च इति न सम्बन्ध्यते इति ज्ञाप्यते, अस्मादेव हेतोः **समृद्धापूर्यस्य समृद्धपुरो राजा इत्यादौ पूर्वपदप्रकृतिस्वरः सिद्ध्यति।[2]**

नागेशभट्टेनेदमप्युक्तं यत् द्वित्रिभ्यामिति सूत्रस्थं भाष्यमेकदेशि एव। यस्मिन्निदमुक्तं यत् समासे कृते समासान्ताः भवन्ति। नागेशभट्टेन समासान्तः कुत्र प्रवर्तते इति विषये नैजं मतं एवम् उट्टङ्क्यते यत्- स च समासान्तः बहु जस् गोमत् जस् इत्यवस्थायाम् अलौकिकविग्रहवाक्ये सुपः परत्वादेव भवति। यदि ततः पूर्व समासान्तः प्रवर्त्तेत तदा वाच्यार्थविरोधः स्यात्, यतो हि सुप्रतिहतसमासार्थं नोपलभ्यते किन्तु तद्विशिष्टमेव। यद्यत्र एवमाशङ्क्येत यत् - तद्विशिष्टमेव समासार्थं स्वीक्रियेत तदा सुबन्तत्वाभावेन सुबन्तात् तद्धित इति सिद्धान्तविरोधः प्राप्नोति इति वक्तुं न शक्यते। यतः तेषामर्थाभावेन परिपूर्ण-पदमितितन्मूलभूतन्यायस्यात्र विषयः नास्ति, अस्मादेव हेतोः पुंयोगादाख्यायामिति सूत्रे भाष्ये इदमुक्तं यत्- अत्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागेव उत्पत्तिः भवति। नागेशेनात्र

---

1. प्रौ,म. 5-4-68 ।
2. 5-4-68 सूत्रे शेखरः ।

विषये विचारान्तरमेवमुक्तम् यत्- समासान्तप्रकरणे ङ्याप्कृसूत्रस्यापि सम्बन्धः नास्ति, यतः तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वमेव नास्ति, सुबुत्पत्तिकाले एव विरोधाभावात् तत्पूर्वभागस्य समाससंज्ञा जायते। समासान्तस्य च तद्वाक्यावयवत्वेन समासग्रहणएन समासान्तस्य ग्रहणात् बहुकुमारीक इत्यादौ उपसर्जनस्त्रीप्रत्ययान्तस्य प्रातपदिकत्वाभावात् ह्रस्वत्वं न भवति । कप्प्रत्ययस्तु ह्रस्वादन्तरङ्गतरः वर्त्तते। तादर्थ्यात् ताच्छब्दं येषां पदानां समासः न तावत्तेषामन्यद् भवति, कपं तावत्प्रतिक्षते इति भाष्येण एवंभूतार्थस्य स्पष्टमभिधानं दृश्यते। एवं बहुविधाः विचाराः समासान्तमुद्दिश्य नागेशेन प्रवर्त्तिताः।[1]

सङ्क्षेपतोऽत्र समासान्तस्वरूपमालक्ष्य कैयटमतं प्राचीनं दीक्षितादेः मतं नवीनमिति वक्तुं शक्यते। उभययोरपि विचारयोः भाषायालोडनं दृश्यते।

1. तत्रैव ।

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# सूत्रभेदकोटिषु परिभाषावचनानि : एकमध्ययनम्

डॉ. गिरीधारीपण्डा*

**कूटशब्दाः** - सूत्रम्, सूत्रस्वरूपम्, सूत्रभेदः, परिभाषावचनानि।

**शोधसारः** - शब्दानुशासनं नाम व्याकरणम्, यत्र साधुशब्दानाम् असाधुशब्दानां च वैधानिकी विचारधारा प्रवर्तते। शब्दानुशासने व्याकरणे वा प्रतिपादितायामेतस्यां विचारधारायां यत् अलौकिकम् अनन्यम् अनुपमम् उपायं साधयति, स्वल्पीयसा आयासेन अल्पीयसा कालेन च याथार्थ्यं प्रतिपादयति। व्याकरणपरिभाषायां तत् सूत्रम्' इति पदेनाभिधीयते, येन माध्यमेन शब्दानुशासनं व्याकरणं वा पूर्णाङ्गं लभते। तत्र शब्दानुशासने अवलम्बितं सर्व वैज्ञानिकं तत्त्वं सूत्रमाध्यमेनैव परिष्कृतं जायते। 'सूत्रम्' इति पदस्योपादानं सर्वथा लघ्वर्थं हि उद्देश्यम्। सूत्रे अल्पाक्षरेण समन्वितेन पदेन बहुविधस्य तात्पर्यस्य उपस्थापनं कर्त्तव्यं जायते इति सूत्रलक्षणात् तस्मात् प्रतिपाद्यते। एतस्मिन् विधौ सूत्रेषु कार्यानुसारं कार्यविधेः प्रतिपादनानुसारं च षड्विधप्रकारभेदव्यवस्था कल्पनीया विद्यते। संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारश्चेति भावेन षड्विधेषु सूत्रप्रकारकोटिषु परिभाषासूत्राणि, सूत्राणां तात्पर्यप्रतिपत्तये समुद्दिष्टानि परिभाषावचनानि च पाणिनीयव्याकरणे अनियमस्थले नियममुपपाद्य सूत्रोपातपदानां गोपायितं रहस्यमुद्घाटयन्ति, शास्त्रीयप्रक्रियानिर्वाहञ्च साधयन्ति। परिशीलनेन परिगणनेन च ज्ञायते यत् पञ्चाशत् संख्यकानि परिभाषासूत्राणि अष्टाध्यायीग्रन्थविमण्डितानि भवन्ति। एवञ्च ५५० संख्यकानि परिभाषावचनानि व्याडति आरभ्य शेषाद्रिसुधि इति यावत् प्रतिनिबद्धानि वर्त्तन्ते। तेषां सर्वेषां सूत्राणां वचनानाञ्च समूहितेन मार्गेण व्याकरणजगति सूत्रात्मकस्वरूपस्य सूत्रतथ्यस्य च परिष्कारात्मकं परिशीलनं पर्य्यालोचनञ्चावधातव्यं जायते। 'अगत्या हि परिभाषाऽऽश्रीयन्ते' इति शास्त्रकृतां वचनात् शास्त्रीयरहस्यस्य पदसाधुत्वोपायस्य च झटिति प्रतिपत्तये परिभाषाणामुपयोगित्वं सर्वथाऽनस्वीकार्यम्। पर्यालोचनेन प्रतिभातं जायते यत् अल्पाक्षरमिति सूत्रस्वरूपवत् कार्यकालसंज्ञापरिभाषमिति भावेन परिभाषावचनान्यपि ग्रथितानि विद्यन्ते। सूत्रसंघटनोपाये पाणिनिना यत् कौशलमवलम्बितं तदपि अत्राश्रितं दृश्यते। पुनश्च संज्ञा-परिभाषा-विधिर्नियम..' इति षड्विधेषु सूत्रभेदकोटिष्वपि संज्ञापरिभाषादिवत् परिभाषावचनं संघटितं विद्यते। अत्रेदमेव तात्पर्यं यत् 'तत्र च नामकरणं संज्ञा', **'अनियमे**

---

* संस्कृतविभागाध्यक्षः, मेदिनीपुरमहाविद्यालयः पश्चिमबङ्गप्रदेशः
(UG & PG ) Midnapore College (Autonomous)

**नियमकारिणी परिभाषा**[1], **'कर्त्तव्यत्वेनोपदेशो विधिः'**[2], **'बहुत्र प्राप्तौ संकोचनं नियमः'**[3] इत्यादिलक्षणमुररीकृत्य प्रथितानि सूत्राणीव परिभाषावचनानि ग्रथितानि विद्यन्ते। एकेनैवोपस्थापनेनालं यत् संज्ञासूत्रवदत्रापि समानाधिकरणमादाय परिभाषावचनं प्रथितं विद्यते। तद्यथा- यथोद्देशं संज्ञापरिभाषम् (प. सं. २) , अनेकान्ता अनुबन्धा (प. सं. ४)। अकृतव्यूहाः पाणिनीयाः (प. सं. ५६) इत्यादीनि । एवंभावेन यथोद्देशं संज्ञापरिभाषाम्, ज्ञापकसिद्धं न सर्वत्र कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते (प.सं. १०), संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति (प. सं. २७), **'एकदेशविकृतमनन्यवत्'**[4] इत्यादिभावेन क्रमेण संज्ञा-परिभाषा-विधि-नियम-अतिदेशादिषु सूत्रभेदकोटिषु बहूनि परिभाषावचनानि संघटितानि विद्यन्ते, यानि सूत्राणां रहस्यावबोधनाय तत्तत्कार्यप्रकारकोटिष्वपि स्वकीयं तात्पर्यमावहन्ति। अतः तेषां परिभाषावचनानामेकत्रीकृत्य परिभाषायाः सूत्रस्वरूपम्, परिभाषायाः संज्ञास्वरूपम् , परिभाषायाः परिभाषात्वम् , परिभाषायाः विधित्वम्, परिभाषायाः नियमत्वम्, परिभाषायाः अतिदेशत्वम्, परिभाषायाः अधिकारत्वम् इत्यादिभिः बिन्दुभिः शोधनिबन्धोऽयं पल्लवितः।

**भूमिका** -

निखिलेऽस्मिन् वाङ्मये अभिव्यक्तिसाधने उपदिश्यमानेषु उपायविशेषेषु सर्वोत्कृष्टा सुस्पष्टा समृद्धा च माध्यमविशेषा भाषा इत्यामनन्ति भाषाविज्ञानविदः। माध्यमभूतायाः अस्याः भाषायाः परिधौ ये निवसन्ति ते सर्वे परस्परमवगन्तुं समर्थाः भविष्यन्ति। विभिन्नेन कारणेन कौशलस्य व्यतिक्रमेण वा विच्युतिं प्राप्य शब्दः ध्वनिविज्ञानात्मिकां शय्यामवलम्ब्य भाषारूपेण प्रयोगक्षमा भवति। इदमेव विचारणेनालं यत् प्रवहन्त्याः भाषायाः विकसनं संकोचनं विलोपनमित्यादीनि प्रक्रियात्मकानि कार्याणि सरितां शय्यावदाकल्प्यन्ते। कस्मिंश्चिदुपाये अवसरे वा इमानि कार्याणि प्रकल्पन्ते प्रवर्त्तन्ते च अन्यथा तन्निर्णेतुम् अवबोधयितुं प्रयोक्तुं वा न शक्यते। अतएव एकस्मिन् अनुशासने बन्धने नियमेन तस्याः किल भाषायाः परीक्षणमपेक्ष्यते, यत् खलु शब्दमर्य्यादया शब्दानुशासनमिति व्यवहारं लभते।

एतस्मिन् विधौ पदानां प्रयोगार्हभूतानां च कृते एकं सङ्घटनं सजातीयतामादाय संस्थाप्यते। तत्र प्रयोगविज्ञाने स्वरूपं विचार्य समानतायां क्रियायाः अवलम्बनं विधीयते। शब्दस्य मूलप्रकृतौ कस्मिन् भागे विकाशः विकारः विश्लेषणं वा अवधार्यते तत् विचार्य सम्पद्यमानायां क्रियायां समानता अवलम्ब्यते। एवं च किमात्मकं कार्यं तस्य स्वरूपं वा इति विचारपुरस्सरं कार्यविधानं साधनं वा निरूप्यते उपदिश्यते च। तत्र पुनः शब्दानुशासने शब्दोपपादनप्रसङ्गे च

---

1. सि.कौ. - पृ.७
2. सि.कौ. - पृ.७
3. सि.कौ. - पृ.७
4. प.सं. ३७

शब्दोपदेशे प्रकृतिनिर्देशे च संक्षिप्तानुशीलनेन सर्वथा अवधार्यते। इदं तत्र अवधेयं यत् समानरूपस्य क्रियमाणस्य कार्यस्य कृते यत्र व्यतिक्रमः लक्ष्यते तदेवोपस्थाप्यते। किमात्मकस्य व्यतिक्रमः, तदपि अवधार्यते। कार्ये कुत्र निषेधः, कुत्र विकल्पः कुत्र वा उभयविध इति सर्व निर्दिश्यते। सूत्रे अल्पाक्षरेण समन्वितेन पदेन बहुविधस्य तात्पर्यस्य उपस्थापनं कर्त्तव्यं जायते इति सूत्रलक्षणात् तस्मात् प्रतिपाद्यते। तथा हि-

**१. अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्र विदोविदुः।।[1]**
**२. लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
**सर्वत सारभूतानि सूत्राण्याहुः मनीषिणः।[2]**

महर्षिवररुचिना किमपि परिवर्तनं विधाय उपस्थापितम् -

**अल्पाक्षरमसन्दिग्धं सारवत् गूढनिर्णयम्।**
**निर्दोषं हेतुमत्त्वं च सूत्रमित्युच्यते बुधैः।।[3]**

सूचनाकारिग्रन्थे सूत्रशब्दस्य व्यवहारः दृश्यते। अतः अनेकार्थसंग्रहकोशे लिखितं यत् 'सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्था'[4] इति। हैमेऽपि एतद्विधं विवेचनं स्वीकृतम्। नागेशः[5] मतमिदं स्वीकरोति। तद्वचनेन सूत्रशब्देन अष्टाध्यायी एव तदेकदेशेषु भोगव्यवहारः। कालिदासेन रघुवंशे तस्य साहित्यिकः अर्थो व्युत्पादितः। यथोक्तं तत्र-'मनोवज्रासमुत्कीर्णे सूत्रस्यैवास्ति मे गतिः।'[6] राजशेखरेणोक्तं यत् - 'अल्पार्थशाखाधीतमन्त्राणां विनियोजनं येन क्रियते, तत् सूत्रमित्युच्यते।'[7] गोल्डष्टुकरमहोदयाः सम्पूर्णसंग्रहरूपे अर्थे अस्य प्रतिपादनमभिलषित्तः।

सूत्रेषु कार्यानुसारं कार्यविधेः प्रतिपादनानुसारं च षड्विधप्रकारभेदव्यवस्था कल्पनीया विद्यते। संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारश्चेति भावेन, यथोक्तं-

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।[8]**

विषयस्यास्योपस्थापनमधः प्रस्तूयते।

**१. परिभाषायाः सूत्रस्वरूपम् -**

**'अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्।'**

---

1. उद्धृत. वायुपुराणम्-४९/१४२
2. उद्धृत. वै. सू.-१/१/१
3. वाररूचसंग्रह :- १.१.१
4. अनेकार्थसग्रहकोशः पृ. ३९
5. महाभाष्यम् उद्योत २.१८१
6. कालिदासप्रणीतं रघुवंशम्- १/४
7. मन्त्राणां विनियोजकं सूत्रकल्प-अ.१
8. उद्धृत. सि.कौ.

लघूनि सूचितार्थानि वेति तल्लक्षणात् सूत्रसङ्घटनं सर्वथा अल्पाक्षरेण भवितव्यम्। पुनश्च पाणिनीयविधौ संज्ञापरिभाषादिभेदेन तेषां विभागोऽपि लक्षितो विद्यते। अनेकानि परिभाषावचनानि विद्यन्ते यानि अल्पाक्षरैः संयुक्तानि विद्यन्ते। तद्यथा-

**१. कार्यकालसंज्ञापरिभाषाम् ( प. सं. २ )**

**२. परात् नित्यं बलवत् ( प. सं. ४२ )**

**३. चानुकृष्टं तोत्तरत्र ( प. सं. ७९ ) इत्यादीनि।**

सूत्रसंघटनोपाये पाणिनिना यत् कौशलमवलम्बितं तदपि अत्राश्रितं दृश्यते। अवधीयते सूत्रकारपाणिनिः तस्मिन्काले प्रथितां सूत्रशैलीमनुकृत्येत्थं प्रतिपादयितुमिच्छति यत् संघटितानि पदानि वा गुरुलघुविचारपुरस्सरं क्रमशः गुरुतां प्राप्य ततश्च लघुतां यान्ति। आहोस्वित् लघुतां प्राप्य क्रमशः गुरुतां यान्ति। संज्ञापरिभाषादिवत् परिभाषावचनं सङ्घटितं विद्यते।

**२. परिभाषायाः संज्ञास्वरूपम् -**

**'तत्र च नामकरणं संज्ञा'**[1] संज्ञा-सूत्राणां सूत्रोपात्तपारिभाषिकपदानामुपादाने वृद्धि-गुण-प्रत्याहार-विभाषा-सवर्णेत्यादिभावेन प्रसिद्धिः। प्रायतः संज्ञासूत्रसहकारेण विधि सूत्राणां प्रवृत्तिर्जायते। यथा- 'अदेङ्गुणः'[2] इति गुणसंज्ञा-विधायक-सूत्रमाध्यमेन 'आद्गुणः'[3] इति विधिसूत्रस्य कार्यं विधीयते। संज्ञाशास्त्रेषु संज्ञासंज्ञिभावपुरस्सरं समानाधिकरणं वर्तते। एतद्विषये अपि बहुवैचित्र्यं भाष्यकृता प्रदर्शितम्- अनाकृतिः संज्ञा, आवर्तिन्यः संज्ञा, संज्ञाधिकारे पठितत्वं संज्ञात्वमित्यादीनि। यदस्तु संज्ञासूत्रवदत्रापि समानाधिकरणमादाय परिभाषावचनं प्रथितं विद्यते। तथाहि-

१. यथोद्देशं संज्ञापरिभाषाम् (प. सं. २)

२. अनेकान्ता अनुबन्धा (प. सं. ४)

3. अकृतव्यूहाः पाणिनीयाः (प. सं. 56)

४. समासान्तविधिरनित्यः (प. सं ८५)

संज्ञासंज्ञिभाव अत्र न भवति। किन्तु तद्वत् सामानाधिकरणता अनुकृता विद्यते।

**३.परिभाषायाः परिभाषात्वम्-**

'अनियमे नियमकारिणी परिभाषा।'[4] परितो भाषन्ते इति परिभाषा। अष्टाध्याय्यां पाणिनिप्रोक्तानि पञ्चाशत्संख्यकानि परिभाषासूत्राणि सन्ति, येषामुपयोगित्वं केवलमष्टाध्यायीस्थ- विधिसूत्राणां प्रवृत्तिसाधनमुद्देश्यम्। 'तस्मिन्निति निर्दिष्टे पूर्वस्य'[5]

---

1. सि.कौ-पृ.७
2. पा.सू.-१.१.२
3. पा.सू.- ६.१.८७
4. सि.कौ. - पृ.७
5. पा.सू.- १.१.६६

इत्यादिकं पारिभाषिकं सूत्रं तु पाणिनिना साक्षादुच्चारितम्। एतेषां परिभाषासूत्राणां प्रयोगस्तु व्याकरणशास्त्रस्य प्रयोगविज्ञाने साधुत्वसम्पादनार्थं विधीयते। एतद्व्यतिरिच्य पाणिनीयसूत्राणामर्थावबोधनाय व्याख्येयपरिभाषारूपेण बहूनि परिभाषा-वचनानि सन्ति, यानि पाणिनीयसूत्रैः ज्ञापितानि वाचनिकानि लोकन्यायसिद्धानि वा सन्ति। सूत्रात्मकपरिभाषां विना एताः परिभाषाः व्याख्येयपरिभाषारूपेण प्रसिद्धाः। यथा-व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्'[1] (प.सं.१) 'निर्दिश्यमानस्यादेशाः भवन्ति'[2] (प.स.१२), 'एकदेशविकृतमनन्यवत्'[3] इत्यादिभावेन।

एतादृशानां परिभाषाणां स्वरूपनिरूपणावसरे भूतिकारेणोक्तं यत्- 'संकेतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधकसहकारित्वेन मुन्यभिप्रेतत्वे सति पाणिश्रयुच्चरितभिन्नत्वम्'।[4] 'तस्मिन्निति निर्दिष्टे पूर्वस्य'[5] इत्यादिकं पारिभाषिकं सूत्रं तु पाणिनिना साक्षादुच्चारितम्। एतेषां परिभाषासूत्राणां प्रयोगस्तु व्याकरणशास्त्रस्य प्रयोगविज्ञाने साधुत्वसम्पादनार्थं विधीयते।

परिभाषासूत्राणां संघटने पाणिनेः वचनं विशेषतया नास्ति। विधिसूत्रोपात्तपदे जायमानस्य सन्देहस्य निराकरणं तद्गतं पदमादाय वचनं पुरस्क्रियते। तद्यथा - षष्ठ्यन्तं निर्देशम् आदाय अलोऽन्त्यस्य इति परिभाषा। अत्र शास्त्रे सर्वं तु परिभाषावचनं तद्रीत्या उपस्थापितम्। यस्मिन् पदे आशये वा सन्देह तस्य प्रतिपादनमाकाङ्क्षते।

१. 'सर्वो द्वन्द्वो विभाषयैकवद् भवति' (प. सं. ३४)
समाहार द्वन्द्वैकवचनेन निष्पत्तिरिति प्रतिपादनमुपरीदं निर्मितम्।
२. 'ज्ञापकसिद्धं न सर्वत्र' (प. सं. १२५)

**४. परिभाषायाः विधित्वम् -**

'कर्त्तव्यत्वेनोपदेशो विधिः'।[6] षड्विधेषु सूत्रभेदेषु 'विधिसूत्रं' 'शास्त्रं' वा प्रमुखं स्थानमर्जयति। स च विधिः- १.सामान्यविधिः २. वैकल्पिकविधिः ३. निषेधविधिः ४. नित्यविधिः ५. परविधिः ६. अन्तरङ्गविधिः ७. बहिरङ्गविधिः ८. असिद्धविधिः ९. अस्वरूपविधिः १०. सन्निपातविधिः ११. निपातनसिद्धविधिः १२. अपवादविधिः। एतेषां विधिशास्त्राणामुपकारत्वेन इतराणि सूत्राणि शास्त्राणि च उपादेयानि वर्त्तन्ते। तेषामेव विधिशास्त्राणां सञ्चरणे अनेके उपायाः प्रतिपादनीयाः वर्त्तन्ते, तत्र आचार्याणां रहस्यं गोपायितं वर्त्तते, येन विधिसूत्राणां प्रवृत्तिः नियम्यते निरूप्यते च। वचनमात्रेण उपस्थापनेन अलम्-

1. प.सं. १
2. प.स.१२
3. प.सं. ३७
4. उद्धृत.परिभाषेन्दुशेखरः, पुरोवाक्
5. पा.सू.- १.१.६६
6. सि.कौ. - पृ.७

१. कार्यमनुभवन् हि कार्यो निमित्ततया नाश्रीयते (प.सं. १०)।
२. यत्र अनेकविधमान्तर्य तत्र स्थानतः आन्तर्यं बलीयः (प.सं. १३)।
३. कृद्ग्रहणे गतिकारकापूर्वस्यापि ग्रहणम् (प.सं. २९)।
४. असिद्धं बहिरङ्गमन्तरङ्गे (प.सं. ५०)।
५. वार्णादाङ्गं बलीयो भवति (प.सं. ५५)।
६. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (प.सं. ४८)।
७. अभ्यासविकारेषु बाध्यबाधकभावो नास्ति इत्यादीनि (प.सं. ६७)।

पाणिनीयविधिसूत्रं कोटित्रयेणाधारितम्। स्थानि, आदेशः, निमित्तेति। दिशा तस्य वैचित्र्यं विचार्यते। परिभाषावचनमपि तद्दिशा विहितं वर्त्तते तद्यथा-

१. असिद्धं बहिरङ्गमन्तङ्गे (प. सं. ५०)
२. परान्नित्यं बलवद् (प. सं. ४२)
३. सूत्रे लिङ्गवचनमतन्त्रम् (प. सं. ७४)
४. सर्वो द्वन्द्वो विभाषयैकवद् भवति (प. सं. ३४)

कार्यप्रकारात् विधिशास्त्राणामपि प्रकारभेदो वर्तते। यथा- एकशेषः, समासविधानम्, विभक्तिविधानं, तिङन्तं, स्त्रीप्रत्ययः, तद्धितः, समासान्तः, सम्प्रसारणम्, आगमः, आदेशः, लोपः, लुक्विधिः, सन्धिः, स्वरविधानम्, निपातनसिद्धः, पुंवद्भावः, ह्रस्वंविधिः, द्वित्वविधिश्चेत्यादयः ।

**५. परिभाषायाः नियमत्वम्-**

'बहुत्र प्राप्तौ संकोचनं नियमः'।[1] अन्यनिवृत्तिफलकत्वे सति सिद्धार्थप्रतिपादकत्वं नियमसूत्रत्वं विधिसूत्रस्य प्रवृत्तिसंकोचनाय यत् सूत्रं संघटितं तत् नियमसूत्रमिति किमपि कार्यमनेन विधीयते। परन्तु विधीनां नित्यप्रवृत्तौ सत्यां नियमयति। संज्ञापरिभाषाधिकाराणां सूत्राणां कृतेऽपि स्थलविशेषमादाय नियमनं जायते। इदं द्विविधंविधेयात्मकं नियमसूत्रं, तद् यथा- 'आकडारादेका संज्ञा'[2] (पा.सू.-१.४.१), निषेधात्मकनियमसूत्रं तद्यथा-'पदान्तस्य'[3] (पा.सु.-८/४/३७) शास्त्रीयं प्रतिवचनमधिगम्यते, प्राप्तौ सत्यामारभ्यमाणो विधिः नियमाय कल्प्यते।

अन्यनिवृत्तिफलकत्वे सति सिद्धार्थप्रतिपादनत्वं नियमसूत्रत्वम्। विधिसूत्रस्य प्रवृत्तिसंकोचनाय यत् सूत्रं निमित्तं भवति तत् नियमसूत्रम्। विधीनां नित्यप्रवृत्तौ सस्यां येन नियम्यते स नियम इति अङ्गीक्रियते तद्यथा - पदान्तस्य (पा.सु. ८/४/३८) परिभाषावचनेषु अनेकानि वचनानि नियमकोटिभूतानि इति परिलक्ष्यन्ते। तद्यथा-

१. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणम् नास्ति (प. सं. २७)

1. सि.कौ. - पृ.७
2. पा.सु.- १.४.१
3. पा.सु.- ८.४.३७

२. गतिकारकपूर्वस्यापि ग्रहणम् (प. सं. ३२८)
३. साम्प्रतिकाभावे भूतपूर्वगतिः (प. सं. ७७)
४. यत्रानेकविधमान्तर्य तत्र स्थानत आन्तर्य बलीयः (प. सं. १३)

**६. परिभाषायाः अतिदेशत्वम्-**

'अन्यतुल्यत्वविधानम् अतिदेशः'।[1] प्रायशः पाणिनीयव्याकरणे पञ्चनवति(९५) संख्यकानि सूत्राणि अतिदेशस्य कृते उद्दिष्टानि सन्ति, यस्य कार्याणि रूपातिदेशः कार्यातिदेशः इत्यादिभावेन सप्तविभागाः संकलिताः वर्तन्ते। कार्यप्रकारात् द्वात्रिंशत्प्रकाराः एते विषयाः भवन्ति। ते यथा- १. आद्यन्तवत् २. अन्तादिवत् ३. स्थानिवत् ४. ङित्वत् ५. कित्वत् ६. युत्वत् ७. पुंवत् ८. पूर्ववत् ९. आम्प्रत्ययवत् १०. एक्वत् ११. पराङ्वत् १२. परवत् १३. कर्मवत् १४. वर्तमानवत् १५. अनद्यतनवत् १६. लङ्वत् १७. भूतवत् १८. भववत् १९. धर्मवत् २०. अंकोवत् २१. कित्वत् २२. समूहवत् २३. असिद्धवत् २४. चिण्वत् २५. लट्वत् २६. सनवत् २७. बहुव्रीहिवत् २८. कर्मधारयवत् २९. अविद्यमानवत् ३०. णिद्वत् ३१. आमप्रत्ययवत् ३२. अप्लुवत्। एतत् प्रकारकमादाय विधिसूत्रं प्रवर्त्तते। 'अतस्मिन् तद्बुद्धिः इत्यस्य तात्पर्यम्। अयं विधिः अनित्य' मिति। किन्तु भाष्ये क्वापि अनुलिखितत्वात् अस्य प्रामाण्यं किमपि नास्ति।

अत्र रहस्यं तु वतिघटितत्वमतिदेशामिति वचनात् यत्र वत् निर्देशः वर्तते तदतिदेशः सूत्रम्। बहुषु परिभाषावचनेषु तद्वत् निर्देश अवाप्यते।

१. व्यापदेशिवदेकस्मिन् (प. सं. ३०)
२. स्वरविधौ व्यञ्जनमविद्यमानवत् (प. सं. ८०)
३. हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् (प. सं. ८१)
४. एकदेशविकृतमनन्यवत् (प. सं. ३७)
५. प्रकृतिवदनुकरणं भवति (प. सं. ३६)
६. व्यपदेशिवद्भावोऽप्रातिपदिकेन (प. सं. ३२)

**७. परिभाषायाः अधिकारत्वम् -**

"उत्तरप्रकरणव्यापी अधिकारः" अष्टाध्याय्याम् ७५ संख्यकानि अधिकारसूत्राणि वर्त्तन्ते। विधिसूत्रैकवाक्यतया बोधजनकत्वमधिकारत्वम्। अथवा स्वदेशे वाक्यार्थबोधकमुत्तरोत्तरसूत्रेषु स्वघटकपरसमर्थकमधिकारसूत्रम्। अनेन विधिसूत्राणां संज्ञासुत्राणां च अवधिः निर्दिश्यते। अङ्गाधिकारः, संज्ञाधिकारः, संहिताधिकारः, प्रत्ययाधिकारः, प्रतिपदिकाधिकारश्चेति अनेकविधः अधिकारः उपपादित इति अस्य कार्य्यप्रकारात् अवधीयते। अधिकारो नाम त्रिप्रकारः यथा-१. कश्चित् एकदेशस्थः सर्वशास्त्रमभिज्वलयति प्रदीपवत्, २. द्वितीयो

1. सि.कौ. - पृ.७

यथा वादिवद्धं काष्ठमनुचकारप्रतियोगमुपतिष्ठते। यथा-'अङ्गस्य' इति। केषाञ्चिन्मते उत्तरोत्तरगमनाधिकार इति स्वरितत्वप्रतिज्ञावलात् अस्योपस्थापनम्। कारिकायामुत्कम्- 'प्रतिज्ञास्वरिताः पाणिनीयाः'।[1]

अधिकारसूत्राणां पाणिनौ यथा सावधिकः निर्देशः निरधिकनिर्देश इति भावन संघटितम्। तथा च कार्यत्रयमधिकारगति अधिकारः इत्यादिभावेन सङ्घटितं तदत्र नास्ति। किन्तु नागेशेन प्रकरणं मनसि निधाय एतेषामेकत्र सङ्घटनं साधितम्। यथा-

१. अनुबन्धविषये (प. सं. ४-८)
२. आदेशविषये (प. सं. १३, १४-३०)
३. अनुवृत्तिविषये (प. सं. १८, १९)
४. सवर्णग्राहकताविषये (प. सं. २०, २१)
५. तदन्तविधिविषये (प. सं. २४, ३०, ३२)
६. अतिदेशविषये - (प. सं. ३१, ३३, ३७, ५१-८१, ८१-१२०)
६. बलवत्त्वप्रतिपादनविषये (प. सं. ३९, ४०, ५३, ५५, ५६-५८, ७१, १००-१०३, १०७, ११३, १२२, १२९)
८. नित्यत्वानित्यत्वविषये (प. सं. ४३-५०) इत्यादीनि।

एवं प्रकारेण षड्विधप्रकारभेदमाश्रित्य सूत्रवत् परिभाषावचनानि शब्दशास्त्रे शास्त्रान्तरेषु वा स्वकीयां तनुं वितनुते, येन शब्दानां साधुत्वप्रकारव्यवस्था अक्षुण्णा साधनीया च जायते अगत्या हि परिभाषाऽऽश्रीयते इति तद्वचनात्। परिभाषायाः सूत्रस्वरूपं सूत्रभेदकोटिषु परिभाषावचनानामन्तर्भावश्च सर्वथा शास्त्रपरिशीलनविधावलोकितो जायते। कार्यविधेः प्रकारानुसारं कुत्रचित् सूत्रानुसारेण कार्यसाधनाय परिभाषावचनानि संघटितानि जायन्ते इति शम्।

---

1. उपदेशजनुनासिक इत्, सि.कौ. पृ.-१४

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# आधुनिकसंस्कृतसाहित्ये परिलक्षिता विश्वबन्धुत्व भावना

डॉ. शिप्रा राय*

संस्कृतसाहित्ये विश्वबन्धुत्वस्य भावना सर्वत्र परिलक्ष्यते। न केवलं वैदिकसंहितासु, अपितु अन्यत्रापि विश्वबन्धुत्वस्य भावना दृश्यते । संस्कृतसाहित्यं विशालमिति सर्वैः सुविदितमेव । अतः विस्तारभयात् मया प्रस्तुते शोधपत्रे केवलम् आधुनिकसंस्कृतसाहित्ये वर्णितस्य विश्वबन्धुत्वस्य भावना प्रस्तूयते।

सर्वप्रथमं विश्वबन्धुत्वस्य भावना हितोपदेशे कल्पिता । तस्यैव वाक्यस्य सर्वत्र साहित्यकारैः व्याख्या कृता। तद्यथा -

**अयं निजः परो वेति गणना लघुचेतसाम् ।**
**उदारचरितानां तु वसुधैव कुटुम्बकम् ।।**[1] इति ।

विश्वबन्धुत्वस्य भावना श्लोकेऽस्मिन् निहितमस्ति। **'वसुधैव कुटुम्बकम्'** इत्यस्यावधारणा कतिपयेषु वैदिकवाङ्मयेषु स्थापिता। यदि वयं सर्वान् मानवान् सर्वान् प्राणिनो वा मित्रवत् पश्याम तदा तेऽपि अस्मान् मित्रवत् पश्यन्ति। अस्माकम् एतादृशाचरणेन हिंसकाः जन्तवोऽपि स्वहिंसवृत्तिं परित्यज्य अस्मान् मित्रवत् स्वीकुर्वन्ति । उक्तञ्च यथा-

**दृते दृंह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।**
**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।।**[2]

पुनरपि यजुर्वेदे एतादृशः सन्देशः प्राप्यते यथा-

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विचिकित्सति।।**[3] **इति ।**

एवमेव ऋग्वेदेऽपि 'वसुधैव कुटुम्बकम्' इत्यस्य भावना सम्यग्तया परिलक्ष्यते । तद्यथा-

**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथा पूर्वे सञ्जनाना उपासते ।।**[4] **इति ।**

---

*एसोशियेट प्रोफेसर, संस्कृत विभागः, त्रिपुरा विश्वविद्यालयः, अगरतला।

1. हितोपदेशः, 4/133
2. यजुर्वेदः, 36/18
3. यजुर्वेदः, 40/6
4. ऋग्वेदः, 10/191/2

एवमेव -

**समानी व आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनो यथा वः सुसहासति ।।**[1] इति

उपर्युक्तयोः मन्त्रयोः समेषां मानवानां मध्ये विश्वबन्धुत्वस्य कामयामास । अथर्ववेदेऽपि पृथिव्याः मानवानां कृते एकतायाः धारणा स्वीकरोति । तद्यथा-

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।**
**अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्या।।**
**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।**
**जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्।।**
**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।**
**सम्यञ्च सव्रता भूत्वा वाचं वदत भद्रया।।**[2] इति ।

उपयुक्तेषु मन्त्रेषु सर्वेषां मानवानां मध्ये सहृदयस्य पारम्परिकरूपेण भावना प्रस्तुता वर्तते। प्रायः लोके जनानां मध्ये परस्परं रागाद्वेषादीनां बहुलता वर्तते । पुत्रः पितुरनुव्रतो भवतु, मात्रा संमना भवतु, पत्नी पत्ये मधुमतीं शान्तिप्रदायिनीं वाचं वदतु, इत्यादि शिक्ष्यति। पुनः अन्तिमे मन्त्रे भ्रात्रोः मध्ये, स्वस्रोः मध्ये च परस्परं सम्बन्धं मधुरं स्यादिति कामयते।

वैदिकसंहितासु न केवलं भौगोलिकविश्वशान्ति अपि तु द्यावापृथिवी, अन्तरिक्षगतेषु, सर्वविधपदार्थेषु सर्वत्र शान्तिवर्णनं प्राप्यते। एवंविधः शान्तिपाठः विश्वजनान् अग्रे कारयति-

**द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।।**[3] इति

संस्कृतसाहित्ये वैदिककालादारभ्य इदानीन्तनकालपर्यन्तं राष्ट्रीय एकता, विश्वभ्रातृत्वबोधः, संहतिबोधस्य भावना पदे पदे परिलक्ष्यते । आधुनिकसंस्कृतसाहित्ये संस्कृतकवितायां विविधविषयाः उपलभ्यन्ते। समाजस्य बहुविधा समस्या, नारीनिर्यातनं, सन्त्रासवादः, आतङ्कवादः, मनुष्यत्वस्य अवक्षयः इत्यादि विषयान् आधुनिक संस्कृतलेखकाः छन्दोबद्धरीत्या काव्यरूपं दत्तवन्तः। आधुनिकसंस्कृतलेखकाः सहजसरलभाषया तेषां अभिव्यक्तिं प्रकाशितवन्तः। आधुनिककविना आचार्यसत्यव्रतशास्त्रिणा स्वविरचिते 'इन्दिरागान्धीचरितम्' इति महाकाव्ये विश्वबन्धुत्वस्य भावना प्रकटीकृता -

---

1. ऋग्वेद, 10/191/4
2. अथर्ववेद, 3/6/5/1-3
3. यजुर्वेद, 36/17

**सर्वेऽत्र सम्भूय सुखं वसन्तु प्रियं वदन्तु प्रियमाचरन्तु ।**
**न विग्रहो वा कलहो भवेद्वा स्याद् भारतं नन्दनतुल्यरूपम् ।।**[1] इति

पुनरपि शास्त्रिमहाभागाः विश्वस्य सर्वत्र मैत्रीभावना आगच्छतु इति वर्णितवान्-

**मैत्री समैरत्र जनैरभीष्टा कल्याणबुद्धिः प्रसृताऽत्र साध्वी।**
**अत्रैव पूर्वे ऋषयोऽभ्यवोचन् कुटुम्बमेकं वसुधां समग्राम्।।**[2] इति

डॉ. कपिलदेवद्विवेदीमहाभागेनापि 'मातृभूमिः' इति शीर्षकेण विश्वबन्धुत्वस्य भावनां प्रस्तुता काव्य-

**विश्वशान्ति सदा ते मत समत विश्वबन्धुत्वशिक्षा सदा ते प्रिया।**
**त्वं तु विश्वं कुटुम्बं सदा मन्यसे ज्ञानदात्री सदा पापहर्त्री मता।।**[3] इति

पुनः द्विवेदिमहाभागाः 'भारत त नुमो भारत त नुमः' इति गीतिकायां काव्यमाध्यमेन सर्वान् जनान् विश्वबन्धुत्वं शिक्षयन्ति । अथ च भारतराष्ट्रस्य गोरवं विश्वेऽस्मिन् पटले स्थापयन्ति । यथा-

**यत्र सत्य शिव सुन्दर राजते यत्र धर्मार्चना वीरपूजा सदा।**
**यत्र विश्व कुटुम्ब मत श्रेयसे भारत त नुमो भारत त नुम।।**
**यत्र क्रान्तेश्च शान्तेश्च दूता स्थिता ज्ञान विज्ञान शौर्यस्थल गीयते।**
**विश्वबन्धुत्व शिक्षाप्रसार स्थल भारत त नुमो भारत त नुमः ।।**[4] इति ।

द्विवेदिमहाभागेन विश्वबन्धुत्वामाधारीकृत्य 'राष्ट्रध्वजगीतम्' इति नाम्ना गीतिकाव्यं रचितम्। तत्र लेखकः अस्मिन् विश्वे शान्तिं कामयते । यथा-

**विश्व शान्ति हितकृत सन्देश भ्रातृभाव समतैक निदेशम् ।**
**चारु चरित कृत-जन-सतोषम् आधि व्याधि भय-शोपन शोपम्।। जयति ।।**
**लोकहिताय जगद्धित हेतो भ्रातृभाव समता-सुख-हेतो।**
**प्रगति विकास-समुन्नति ख्र हेतो विलसेद् राष्ट्रध्वज सुख सेतु।। जयति।।**[5] इति

प्रायः सर्वेषु संस्कृतवाङ्मयेषु विश्वबन्धुत्वं कामयन्ते लेखकाः। 'वसुधैव कुटुम्बकम्' इत्यस्य भावना सम्प्रति आवश्यकी वर्तते। वयं पश्यामः यद् विश्वं रागद्वेषादिभावनया ज्वलितं वर्तते। एकं राष्ट्रम् अपरं प्रति क्रुध्यति । प्रतिदिनं परस्परं येन केन प्रकारेण विवाद एव दृश्यते लोके। न केवलं राष्ट्राध्यक्षा एव विवादे पतिताः, अपितु सभ्याः नागरिकाः अपि परस्परं रागद्वेषादिभावनया प्रभाविताः ।

---

1. इन्दिरागान्धीचरितम्, पूर्वपीठिका, 4
2. इन्दिरागान्धीचरितम्, 24/23
3. राष्ट्रगीताञ्जलिः, मातृभूमिः, 9
4. राष्ट्रगीताञ्जलिः, भारत त नुमो भारत त नुमः, 2, 20
5. राष्ट्रगीताञ्जलिः, राष्ट्रध्वजगीतम्, 2, 8

पुनरपि द्विवेदिमहाभागेन विश्वबन्धुत्वस्य भावनां काव्यरूपं प्रदत्तवान। तद् यथा-

**विश्वबन्धुत्वमन्त्रं सदा गीयतां विश्वकल्याण-भावं सदा धीयताम्।**
**लोककल्याण-भावामृतपीयतां लोक-शोकाऽऽधिकातापावलिं क्षीयताम्॥ विश्व॥**
**विश्वशान्ते समस्याऽस्ति घोराऽधुना, राष्ट्रसंघसमाधातुकामो सदा।**
**विश्वशान्तिं विना नास्ति लोके सुखं नैव दुखाऽऽधिव्याधेश्च सदारणम्॥विश्व॥**
**विश्वबन्धुत्वभावोदयसौख्यदं, विश्व-कल्याण भाव सदा मोदद।**
**विश्वबन्धुत्व-भावेन शान्ते सुधा भ्रातृभावोदय स्नेह-भावोद्गम॥ विश्व॥**
**विश्वबन्धुत्व-मन्त्र सदा श्रेयसे विश्वबन्धुत्व शक्ति सदा प्रेयसे।**
**विश्वशान्तै समृद्धै सदा सपदे विश्वबन्धुत्व-भावोद्गति समुदे॥विश्व॥**[1] इति

रमाकान्तशुक्लमहाभागाः 'भाति मे भारतम्' इति ग्रन्थे विश्वबन्धुत्वस्य भावनां काव्यरूपं दत्तवन्तः । तद् यथा-

**विश्वबन्धुत्वमुद्घोषयत् पावनं, विश्ववन्द्यैश्चरित्रैर्जगत् पावयत्।**
**विश्वमेकं कुटुम्बं समालोकयद् भूतले भाति मेऽनारतं भारतम्॥**[2] इति

प्राचीनकवेरपेक्षा आधुनिककविना विश्वबन्धुत्वस्य भावना अधिकरूपेणोद्घाटिता। अत्र कारणमपि भवितुं शक्नोति यत् सम्प्रति अस्मिन् विश्वे विद्यमानाः वैरस्य भावनायाः शमनं स्यादिति। प्रोफेसर राधावल्लभत्रिपाठिनः अर्वाचीनसंस्कृतसाहित्ये महत्त्वपूर्णस्थानं लभते। ते बहुषु काव्यग्रन्थेषु विरचितवन्तः। तेषां रचनायां प्रत्यक्षभावेन विश्वबन्धुत्वस्य भावना न परिलक्षिता किन्तु मानवीयसंवेदना तस्य रचनायां परिलक्ष्यते।

निष्कर्षरूपेण वक्तुं शक्यते यत् सम्प्रति अस्माकं कृते विश्वबन्धुत्वमावश्यकम् । यदि वयं 'वसुधैव कुटुम्बकम्' इति वचनं सदा पालनं कुर्मः तदा सदा सुखिनः भवामः। कस्यापि देशस्य, प्रदेशस्य, स्थानस्य वा भवेत् तान् सर्वात् बन्धुत्वं स्वीकरणीयमिति दिक्।

**सहायकग्रन्थाः-**


1. अथर्ववेदसंहिता, हरफ प्रकाशनी, प्रथम प्रकाश, महालया, 1385
2. इन्दिरागान्धीचरितम्, सत्यव्रत शास्त्री, भारतीय विद्या प्रकाशन, प्रथम संस्करण, 1976
3. ऋग्वेदसंहिता (प्रथम एवं द्वितीयखण्ड) हरफ प्रकाशनी, कलकाता, 2000, 2010
4. भाति मे भारतम, रमाकान्त शुक्ल, देववाणी परिषद्, दिल्ली, प्रथम संस्करण, 1980
5. राष्ट्रगीताञ्जलिः, कपिल देव द्विवेदी, विश्वभारती अनुसंधान परिषद्, 1978
6. यजुर्वेदसंहिता, हरफ प्रकाशनी, प्रथम प्रकाश, 1382
7. हितोपदेशः, नारायण शर्मा, संस्कृत पुस्तक भाण्डार, कल-6, तृतीय संस्करण, 2008


1. राष्ट्रगीताञ्जलिः, वसुधैव कुटुम्बकम्, 1, 4, 6, 10
2. भाति मे भारतम्, 1

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# कालिदासकृतिषु दीपशिखाचित्र-प्रयोग-समीक्षा

डॉ. शुभश्री दाशः*

**संक्षिप्तसारः**-उपमालङ्कारप्रयोगे कालिदासस्य ख्यातिः सुविदिता। काव्यकृतिषु विविधमानवीयभावावेगवर्णनावसरे तत्र बहुविधोपमानविनियोगकाले च साधारण-जनजीवनादृतायाः दीपशिखायाः चयनं कवेरनन्यसाधारणप्रतिभां प्रकटयति। अतः सहृदयहृदयराजिषु 'दीपशिखा' इत्युपनाम विभूषितः कालिदासः राजते तमाम्। सर्वासु अलंकार-गुणरीति-रस-ध्वनिसंचारितेषु कालिदासकृतिषु दीपशिखाचित्र-गुम्फना-कौशलं कथमनन्यसाधारणं तदेव अत्रास्माकं विवेचनीयमस्ति।

**प्रमुख शब्दाः**-कालिदासः, दीपशिखा, रघुवंशः, कुमारसम्भवम्, मेघदूतम्।

**उपक्रमः**- उपमालंकारप्रयोगे काव्यजगति कालिदासस्य कविप्रतिभां प्रकटयन् 'उपमा कालिदासस्य' इत्याभाणकं प्रसिद्धमस्ति। अर्थालंकारेषु उपमालंकारं लक्ष्ययन् साहित्यदर्पणकारेण विश्वनाथ-कविराजेन उक्तम्-'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः'।[1] अत्रायमाशयः- यत्रैकस्मिन्नेव वाक्ये द्वयोः वस्तुनोः अथवा उपमानोपमेययोः वैषम्यं विहाय केवलं साम्यमेव उच्यते तत्रोपमालङ्कारः स्यात्। अस्य महाकवेः कवितासु उपमालंकारराजिसु उपमानोपमेय-प्रयोगेषु लिङ्गवचनयोः साम्यमौचित्यं याथार्थ्यं सौन्दर्यं चोपलभ्यन्ते । परन्तु तुलनात्मकविवरणी-प्रदत्तेषु सर्वेष्वपि अर्थालंकारेषु कालिदास-कविता-प्रदत्त-चित्रमनन्यम् इति भावार्थ उपर्युक्तः आभाणकस्थः उपमा-शब्दः सूचयति। अनन्यभावचित्रसम्पादनेषु 'दीपशिखा' इति उपमानस्य कविता-प्रयोगकौशलं अनेकेषु काव्यनाटकादिषु दृश्यते। कविकल्पना-संजीविता दीपशिखा वर्णनावैभवं विस्तारयन्ती विविधमानवीयाभावावेग-शोभासमुदयमभिव्यञ्जयन्ती कवीन्द्रमेनं 'दीपशिखा'- इत्युपनाम-सम्मान-विभूषितमकरोत। कवितासु दीपशिखा-कल्पना-संयोगात् कालिदासस्य समुचितोक्ति-विशेषेषु मुग्धः सन् श्री विक्रमादित्यमहाराजः दीपशिखा-नामकं विरुदं कवये ससम्मानं प्रददाविति जनश्रुतिः। अनुपदं दशमशताब्दे विद्यमानः आलङ्कारिक-विनोदचन्द्रः तस्य काव्यशिक्षानामके आलंकारिकग्रन्थे येषां संस्कृतकवीनां विरुदनामान्यकथयत् तेषु कालिदासः 'दीपशिखा-कालिदासः' इति ज्ञायते। अतः दशमशताब्द्यामपि कालिदासस्य दीपशिखा-नाम-प्रसिद्धिः प्रस्फुटं

---

*अध्यापिका,संस्कृतविभागः रेभेन्सा विश्वविद्यालयः, कटकम्,ओडिशा

1. साहित्यदर्पणः,१०.१४

स्वीकृता इति नास्त्यत्र संशयलेशः[1]। अस्मिन्नवसरे एवं विवेचनीयं यत् कालिदासकाव्येषु बहुविधोपमानानां सफलप्रयोगेषु 'दीपशिखा'-इत्युपमानप्रयोगस्य किं वैशिष्ट्यम्? कालिदासस्य 'दीपशिखा'-इत्युपाधि-विभूषणस्य किं सांस्कृतिकमहत्त्वं, तत्र का च वार्ता पाठकेभ्यः प्रदत्ता ? एवं विधानां महत्वं प्रश्नानामुत्तरप्रदानाय संस्कृतालंकारिकग्रन्थानां मार्गदर्शनेन भाषातात्त्विक-सांस्कृतिक-परम्परामाश्रित्य कालिदास-ग्रन्थस्थितानां दीपशिखाऽध्युषित कवितानां समीक्षणमत्र सुविचारेण स्वीक्रियते।

**सञ्चारिणी दीपशिखा-** दीपशिखाचित्रराजि विराजिता कालिदासी कविता महाकवेः विपुलवर्णनावैभवं कथं प्रभामहत्या प्रभावितवती तदत्र संक्षेपेण प्रस्तूयते। कवेरेका अतिरमणीया दीपशिखाकल्पना राजकुमार्या इन्दुमत्याः स्वयम्वरप्रसङ्गेः स्वतः प्रसृता सती सहृदय-हृदय-साम्राज्यं सुचिरं जितवती। यथा-

**संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिम्बरा सा।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥[2]**

पतिम्बरा सा इन्दुमती रात्रौ संचारिणी दीपशिखा इव यं यं भूमिपालं व्यतीयाय (अतिक्रम्य) गता स स भूमिपालः नरेन्द्रमार्गाट्ट इव विवर्णभावं (तमोवृत्तत्वं) प्रपेदे (प्राप्तवान्)।

कदाचित् दीपशिखा स्वयं न संचरणशीला भवेत्, परन्तु केनापि संचार्यते। अत्र राजन्य-वर्गाणां पुरतः स्वयं वरितुकामा वरणमालाधारिणी इन्दुमती द्वारपालिकया सुनन्दया संचारिता इति कविना संचारिणी-दीपशिखा-वर्णना परिकल्पिता। ईदृशी दीपशिखा पुरःस्थितानि समीपागतानि वस्तूनि प्रकाशयन्ती पश्चात् कृतानि तानि सर्वाणि झटिति घनान्धकारे निपातयति। तथा इन्दुमती पुरतः स्थितान् राजन्यवर्गान् आशा-प्रकाशैः सम्भावयन्ती यदा पुनः पुनः पुरस्तात् गतवती तदा तान् अनुक्रमशः घोरे निराशान्धकारे निक्षिप्तवती। किञ्च दिव्यः सर्वदा अदिव्यं स्वकीय भासा अतिरिच्यते इति इन्दुमत्याः दिव्या तनू तेजसा सर्वान् लौकिककान्तिभास्वरान् राजपुत्रान् अतिक्रान्तवती। पुनरपि ऐहिकसौभाग्यभोगवशगो मानवः अभिजातोऽपि विचारमूढतया आमुष्मिकसौभाग्यमनवाप्य निराशाभावं भजत इति ध्वन्यर्थः प्रतिपाद्यते। अत्र 'काव्यस्यात्मा ध्वनिरिति' उक्तिः[3] संचारिणी-दीपशिखा-प्रयोगात् सफलीकृता मन्यते। नरेन्द्रमार्गाट्टपदेन राजमार्गस्थः प्रासादः वुध्यते, पुनः इव-शब्दोत्र औपम्यवाचि पदम्। तत्र राजन्यानां उच्चसिंहासनावस्थानत्वात् ते राजमार्गाट्टै तुलिताः। रात्रौ इन्दुमती संचारिणीदीपशिखा इव, राजन्यवर्गः नरेन्द्रमार्गाट्ट इव, इति उपमालंकारद्वयं यथौचित्यं व्यवहृतं सत् काव्यशोभां वर्धयति प्रासङ्गिकं काव्यरसानन्दं च सहृदयहृदि विस्तारयति। अत्र प्रथमपंक्तिद्वये झणझणायमानपदावलीनां झंकृतिः अव्यक्तरमणीयं (इन्दुमत्याः)

---

1. कालिदास काव्यसौरभम्, १०-११
2. रघुवंशः,६.६७
3. ध्वन्यालोकः,१-१

नूपुरशिञ्जितं अभिव्यञ्जयति। पुनः शेषपंक्तिद्वये वह्निवर्ण र-कारैः साकं सानुनासिक प-वर्गवर्णप्रवर्तनं नरपतिनां हृदयहननं ध्वनयति ।

**प्रभामहती दीपशिखा-** कुमारसम्भवमहाकाव्यस्य प्रथमसर्गे पार्वतीजन्मवर्णे भावविभवशालिनी प्रभामहती दीपशिखा दृश्यते। नगराजः हिमालयः आजन्मविशुद्धायाः पार्वत्याः जननात् प्रथमं पूतः तदनन्तरं विभूषितः आसीत्। यथा-

**प्रभामहत्या शिखयेव दीपः त्रिमार्गयैव त्रिदिवस्य मार्गः।**
**संस्कारवतत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च॥**[1]

यथा त्रिमार्गया मन्दाकिन्या स्वर्गमार्गः (त्रिदिवस्यमार्गः), यथा संस्कारशोभितया गिरा विद्वज्जनः (मनीषी), यथा प्रभामहत्या शिखया दीपः तथा पार्वत्याः जननात् हिमालयः प्रथमं पूतः पुनः पूतत्वकारणात् तदनन्तरं विभूषितोऽभवत्। अत्र प्रत्येकस्मिन् विषयचयने प्रथमं पवित्रता तदनन्तरं च शोभाधिकता इति कालिदासोक्तिः विस्तृता। कश्चिदपवित्रः कदाचित् शोभाभावं नाप्नुयादिति कविकल्पितैर्मालोपमालंकारैर्व्यज्यते। न केवलं जनकस्य अपितु मानवसमाजस्य पवित्रीकरणं शोभावर्धनं च अनुक्रमशः कन्यालालनपालनजागराणात् प्रवर्धत इति कविप्रेरिता वार्ता। अत्र पार्वत्यर्थे उद्धृतं उपमानत्रयं (प्रभामहती शिखा, त्रिमार्गा, संस्कारवती गीः) पुनरपि हिमालयार्थे उद्धृतमुपमानत्रयं (दीपः, मार्गः, मनीषी) यथाक्रमं स्त्रीलिङ्ग-पुंलिङ्ग-शब्दनिचयने प्रयुक्तम्। काव्ये चित्रकल्पनाचयने शब्दानां लिङ्गसाम्यता महाकवि-कवितायाः चमत्कारभावप्रभावं विस्तारयति।

**प्रवर्तमाना दीपशिखा-** अथ प्रवर्तिता दीपशिखा-वर्णना रघोः सुनोः अजस्य पैतृकं गुणनिचयमाधारीकृत्य परिकल्पितं दृश्यते। यथा-

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम्।**
**न कारणात् स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात्॥**[2]

जननान्तरं अजस्य ओजस्विरूपं, वीर्यं, नैसर्गिकमुन्नतत्वम् इति तत् सर्वमेव पैतृकमासीत्। कुमारः अजः प्रदीपात् प्रवर्तितो दीप इव स्वात् कारणात् भिन्नो नाभवत्। अत्र कुमारः उपमेयः, प्रदीपात् प्रवर्तितो दीपः उपमानम् इव औपम्यवाचि पदम् इति उपमालंकारः। पितुः पुत्रस्य अभेदगुणसामान्यधर्म नञ्-प्रयुक्तविभेदक्रियापदादुपलभ्यते। अत्र बृहदारण्यकोपनिषदः पञ्चमभागे ब्रह्मस्वरूपवर्णनस्य प्रभावः संलक्ष्यते।

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥**[3]

ब्रह्मप्रवर्तितं वस्तु यथा परिपूर्णतां भजते तथा च दीपप्रवर्तितो दीपः। अत्र लौकिकदीपेऽपि अलौकिककल्पना कविना प्रकटिता।

---

1. कुमारसम्भवम्, १.२८
2. रघुवंशः, ५.३७
3. द प्रिन्सिपाल् उपनिषद्स २८९

**प्रभाहत दीपशिखा**- रघुवंशमहाकाव्ये प्रभाहतदीपशिखा-वर्णना बहुशः दृश्यते। यथा-

**रघुवंशप्रदीपेन तेनाप्रतिमतेजसा।**
**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाऽभवन् ॥[1]**

जन्मना रामचन्द्रः रघुवंशप्रदीपः (प्रकाशकः) आसीत्। अप्रतिमतेजसा तेन रक्षागृहगताः दीपाः वा सूतिकागृहस्थिताः दीपाः प्रतिषिद्धा इव अभवन्। किं च रक्षोगृहगता दीपाः रघुवंशप्रदीपस्य रामचन्द्रस्य असामान्यतेजसा प्रभावरहिताः म्लानाश्च संजाताः। अत्र मल्लीनाथेन उक्तम्-'महादीपसमीपे नाल्पाः स्फुरन्तीति भावः'। अत्र रक्षोदीप वर्णनाप्रसङ्गे प्र-उपसर्गस्य अप्रयोगः पुनः रघुवंशप्रदीपेन इत्यत्र प्र-उपसर्गस्य प्रयोगः यथाक्रमं राक्षसकुलस्य अधःपतनं (निपातनं) रघोः कुलस्य प्रभाधिक्यं (उत्थापनं) च द्योतयतः। पुनरपि रघुवंशमहाकाव्यरचनया अन्याः तात्कालिकाः कविकृतयः निष्प्रभावं लप्स्यन्ते इत्यर्थोऽपि ध्वन्यते। 'प्रत्यादिष्टा अभवन् इव'- इति उत्प्रेक्षालंकारप्रसङ्गेऽपि काव्ये दीपचित्रप्रयोगः भारतीयानां जनजीवने दीपस्य सांस्कृतिकमहत्त्वमुपस्थापयति।

रघुवंशमहाकाव्यस्य प्रथमे सर्गे ईदृशी प्रभाहतदीपशिखावर्णना प्रयुक्ता। यथा-

**अरिष्टशय्यां परितो विसारिणा**
**सुजन्मनः तस्य निजेन तेजसा।**
**निशीथदीपाः सहसा हतत्विषो**
**बभूवुरालेख्य समर्पिता इव॥[2]**

सुजन्मनः तस्य अरिष्टशय्यां परितो विसारिणा निजेन तेजसा सहसा हतत्त्विषः निशीथदीपाः आलेख्यसमर्पिताः इव बभुवुः। दिलीपसुनोः रघोः जननानन्तरं सूतिकागृहशय्यां कविर्वर्णयति। शोभनजन्मनः तस्य शरीरस्य विसारिणा निसर्गतेजसा निशीथदीपाः सहसा क्षीणकान्तयो जाताः। अत्र निशीथशब्दो दीपानां प्रभाधिक्यं द्योतयति। निशीथदीपाः इत्यत्र बहुवचनप्रयोगात् दीपानां प्रभाधिक्यमपि रघोः शरीरप्रभा अतिक्रान्तवती इति अर्थः सम्पद्यते। तत्र दीपाः आलेख्यसमर्पिता वा चित्रार्पिता भूत्वा निष्प्रभतामापुः। अत्रापि उत्प्रेक्षालंकारप्रसङ्गे दीपचित्रकल्पना मनोरमा। पुनरेका प्रभाहतदीपशिखावर्णना प्रभातवर्णनावसरे दृष्टिपथमायाति। यथा-

**भवति विरलभक्तिर्म्लानपुष्पोपहारः**
**स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।[3]**

निशान्ते पुष्पस्रजः विरलसंरचनां प्राप्ताः । अधुना प्रभातकालप्रदीपाः स्वकिरणानां परिवेषस्य उद्भेदेन वा मण्ड़लस्फुरणेन शून्याः निस्तेजकाः जाताः। अत्र साधारणजनजीवने सामान्यदीपस्य असामान्यप्रभावप्रयोगः कविना प्रदर्शितः।

1. रघुवंश,१०.६८
2. रघुवंशः,३.१५
3. रघुवंशः,५.७४

निर्वाणोन्मुखी दीपशिखावर्णनायां निर्वाणोन्मुखी दीपशिखाचित्रप्रयोगे कालिदासस्य अद्भुतप्रभावः परिलक्ष्यते। मृत्युशय्यास्थितस्य दशरथस्य अन्त्यवर्णना ईदृशी भावभेदिनी कृता–

**निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान।**
**आसीदासन्ननिर्वाणः प्रदीपाऽर्चिरिवोषसि॥**[1]

निर्विष्टविषयस्नेहः दशान्तमुपेयिवान् स (दशरथः) उषसि प्रदीपार्चिः इव आसन्ननिर्वाणः आसी। दीपार्चिः नक्तं दीपभाजनस्थं तैलं (स्नेहं) सवर्मास्वाद्य उषःकाले दीपदशायाः अन्ते निर्वाणोंन्मुखः (विनाशोन्मुखः) तिष्ठति। तथा दशरथः यौवनकाले समस्तविषयसुखम् (स्नेहं) अनुभूय अधुना अन्त्यदशायां (मरणदशायां) उपस्थितः। यथा दीपार्चिः आसन्ननिर्वाणः (समीपगत–नाशः)[2] तथा राजा दशरथोऽपि आसन्ननिर्वाणः (समीपगत–मोक्षः)[3] इत्यर्थः प्रतीयते। उपमालंकारप्रयोगे दीपार्चिचित्रकल्पनाऽत्र काव्यनिहितं गर्भितार्थं द्योतयति। एतादृशी अन्यैका वर्णना रघुवंशनृपतेः अग्निवर्णस्य विनाशोन्मुखदशायां दृश्यते। यथा–

**व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम्।**
**राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम्॥**[4]

राज्ञि क्षयातुरे सति तत्कुलं पश्चिमकलायां स्थितेन्दु व्याम इव पङ्कशेषं घर्मपल्वलमिव वामनार्चिः (अल्पशिखं) दीपभाजनमिव अभूत्। रघुकुलस्य तेजोह्रासावसरे वामनार्चिदीपभाजनेन साकं प्रदत्तं उपमानत्रयं चित्रकल्पप्रयोगरम्यतां प्रतिपादयति।
ईदृशी वर्णनाऽपि शाकुन्तलनाटके कञ्चुकिनः जरन्मतिप्रदर्शने प्रस्तुता। यथा–

**क्षणात् प्रबोधमायाति लंघ्यते तमसा पुनः।**
**निर्वास्यतः प्रदीपस्य दशेव जरतो मतिः॥**[5]

तैलशेषावस्थायां निर्वाणोन्मुखी दीपशिखा क्वचित् प्रकाशाधिक्यं पुनः क्वचित् प्रकाश्यराहित्यं भजते। परिणतवयसि कञ्चुकिनः मतिः क्षणं प्रबोधिता सती अपरस्मिन् क्षणे अप्रबोधनावस्थां गतवती। प्रसङ्गेऽस्मिन् दीपशिखावर्णना मनोरमां सार्वजनीनशोभामातनोति। 'जरतो मतिः निर्वास्यतः प्रदीपस्य दशा इव'– अत्र उपमालंकारप्रयोगे दीपदशाचित्रकल्पना परमरमोणीयां काव्यशोभां साधयति।

**निर्वापिता दीपशिखा–** निर्वाणोन्मुखीदीपशिखामतिक्रम्य महाकविः दीपशिखायाः नाशदशाविशेषं कुमारसंभवमहाकाव्ये रतिविलापप्रसङ्गे विवृणोति। वाताहतदीपशिखावर्णन–क्रमेऽपि कवेः मानवीयमावेदनं मार्मिकमस्ति। यथा–

---

1. रघुवंशः,१२.०१
2. अमरकोषः,३.१.९४
3. अमरकोषः,१.५.६
4. रघुवंशः,१९.५१
5. अभिज्ञानशाकुन्तलम्,५.४२४

**गत एव न ते निवर्तते स सखा दीप इवानिलाहतः।**
**अहमस्य दशेव पश्य मामविसह्य व्यसनेन धूमिताम्॥**[1]

मदनदहनानन्तरं वैधव्यपीडिता विलपन्ती रतिदेवी तत्रोपस्थितं कामदेवस्य प्रियसखं वसन्तम् आहूय मार्मिकं निवेदितवती–

हे वसन्त! स ते सखा अनिलाहतः दीपः इव गतः एव, न पुनः निवर्तते। अहमस्य दीपायमानस्य दशा इव अविषह्य व्यसनेन धूमितां मां पश्य। ईदृशी वर्णना सूचयति यत् दीपसंयुक्तायाः दशायाः (वर्तिकायाः) दीपार्चिः जीवितसर्वस्वं भवति। तद्वत् कामदेवः रतिदेव्याः जीवनदशायां (अवस्थायां) सर्वस्वमेव आसीत्। वेगशीलानिलाहतो दीपो यथा नष्टो भूत्वा पुनः न निवर्तते तथा देवदेवस्य हरस्य वेगशीलक्रोधानलाहतो मदनः पुनः न निवर्तनक्षमः। दीपसंयुक्ता दशा (वर्तिः) यथा धूमायिता विवर्णा दृश्यते तथा रतिदेवी वैधव्यवेदनाधूमसंवेष्टिता दीपदशायाः दुर्दशां गता। अत्र दीपचित्रकल्पनासमन्वितं उपमालंकारद्वयं रतेः असह्यवैधव्यवाधां निवेदयितुं क्षमम्।

पुनरीदृशी चित्रकल्पकल्पना रघुवंशनृपतेः अग्निवर्णस्य मरणदशावर्णनायां दृश्यते। यथा–

**स त्वनेकवनितासखोऽपि सन् पावनीमनवलोक्य सन्ततिम्।**
**वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात्॥**[2]

बहुवनितासम्भोगात् क्षयातुरः अग्निवर्णनृपः कुलपावनीं सन्ततिं लब्धुमक्षमो जातः। पुत्रमुखमनवलोक्य वैद्यैः यत्नं चिकित्सितोऽपि असौ घातकं रोगं प्रदीपो वायुमिव नातिक्रान्तवान्। वायुवेगेन यथा दीपो नश्यति तथाऽसौ प्राणान् तत्याज इति अर्थः समुदेति। अत्र उपमालंकारप्रयोगे प्रदीपचित्रकल्पना समवेदनासम्बर्धनशीला सती काव्यशोभामातनोति।

एवंविधं मानवीयमावेदनं वाताहतदीपचित्रप्रसङ्गेषु काव्यशोभावर्धनशीलं सार्वजनीनं च भवति।

**तैलबिन्दुसंयुक्त-दीपशिखा-** तैलबिन्दुसंयुक्तदीपशिखावर्णने कवेः काव्यनिर्माण कौशलमपि लक्षणीयम्। यथा–

**वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत्।**
**ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम्॥**[3]

अकाशात् पतिता स्रक् स्पर्शमात्रेण इन्दुमतीं पातयामास। यथा दीपार्चिः तैलबिन्दुना सहैव भूमौ पतति तथा इन्दुमती स्वीयपत्या अजेन साकं भूमौ निष्पपातः प्राणान् च त्यक्तवती।

'इन्दुमती प्रथमं स्वयम्वरे दीपशिखाकल्पया स्वदेहकान्त्या अजं महाराजमाकर्षितवती।

1. कुमारसंभवम्,४.३०
2. रघुवंशः,१९.५३
3. रघुवंशः,८.३८

अन्त्येऽपि तादृशशरीरेणैव सा पतिमाकर्षितवती। अर्थात् भौतिकभोगानुभवाय उपयुक्तं साधनमेव स्वर्गभोगानुभवाय च उपयुक्तमासीत्। अनेन अनयोर्दम्पत्योः आद्यः लौकिकानन्दः अन्त्ये अलौकिकानन्दरूपेण परिणतः'[1] एवमपि कालिदासकवितासु स्वर्ग-मर्त्य-मिलनं सम्भावितम्।

**निष्कम्प्य-दीपशिखा-** योगेश्वरस्य शिवस्य हृदये प्रणयभावजागरणाय कामदेवः माधवेन रत्या च सह हिमालये स्थाण्वाश्रमं प्रविवेश। पर्यङ्कबन्धे स्थिरपूर्वकायं तं संयमिनं त्रियम्बकं तत्रासौ ददर्श। महादेवस्य योगाधिरूढ़निश्चलावस्था निवातनिष्कम्पप्रदीपचित्रेण प्रदर्शिता। यथा-

**अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम्।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्प्यमिवप्रदीपम्।।[2]**

अन्तश्चराणां मरुतां निरोधात् अवृष्टिसंरम्भम् अम्बुवाहम् इव (स्थितम्), अनुतरङ्गम् अपाम् आधारमिव इव (स्थितम्) निवातनिष्कम्पप्रदीपम् इव (स्थितम्) तं संयमिनमसौ कामदेवः ददर्श। अत्र सार्वजनीनं सार्वकालिकं सार्वस्थानिकम् उपमानत्रयं योगस्थस्य निश्चलावस्थां स्पष्टीकृत्य सहृदय-हृदयं जयति पुनः उपमालंकारप्रयोगे भावनिवेदने कवेः महानुभवं च द्योतयति।

**अतैल दीपशिखा-** हिमालये वनेचरैः व्यवहृताः 'अतैलपूराः सुरतप्रदीपाः' महाकवेः कविताराज्ये 'औषधिप्रदीपा' इति सुप्रसिद्धाः। यथा-

**वनेचरणां वनितासखानां दरीगृहोत्सङ्गनिषक्त भासः।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः।।[3]**

सुरतकर्मणि प्रदीपाः भवन्ति इति जनजीवनप्रसिद्धिः। नक्तं कन्दरगृहेषु स्वकीयाभिः वनिताभिः सह वनेचराः प्रणयलीलां संरचितवन्तः। तस्मिन्नवसरे रममाणानां वनेचराणां सुरतकर्मणि तृणविशेषा औषधयः स्वतः दीप्तिमन्तः तैलरहितान् सुरतप्रदीपान् प्रज्वलितवन्त इति कविभणितिः प्रयुक्ता। जनजीवनस्य प्रत्येकस्मिन् विभागे दीपप्रभायाः अद्भुतप्रभावः परिलक्ष्यते। संजीवनीटीकाकारेण मल्लिनाथेन स्पष्टीकृतं यत् : 'अत्रौषधिष्वारोप्यमाणस्य प्रदीपस्य प्रकृतसुरतोपयोगित्वात्परिणामालंकारः।...तथा प्रदीपकारणतैलपूरणनिषेधादकारणा-कार्योत्पत्तिर्लक्षणा विभावना चेत्युभयोः संसृष्टिः'। वर्णनायाम् 'अतैलपूराः सुरतप्रदीपाः' सहृदयहृदयं यथारुचि जयति।

**स्थिरदीपशिखा-** स्थिरदीपशिखामादृश्य मणिरत्नप्रदीपानां वर्णनाऽपि रमणीया। यथा-

---

1. कालिदास काव्य सौरभम्, पृ-१८।
2. कुमारसंभवम्,३.४८
3. कुमारसम्भवम्,१.१०

**ज्वलन्मणिशिखाश्चौनं वासुकिप्रमुखा निशि।**
**स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते।।[1]**

भयङ्करः तारकासुरः अतीव पीड़ादायक आसीत्। तं सेवमानानां वासुकिप्रमुखसर्पेश्वराणं कीदृशी दयनीयावस्था आसीत् तदत्र प्रदर्शिता। मणिप्रभाभूषिताः सर्पनायकाः अनाहतौज्वल्यधाराभिः तेषां शिरोमणिराजिभिः तारकं सेवितवन्तः। 'स्थिरप्रदीपतामेत्य' इत्यत्र सर्पाणां न्यूनाधिक्यभावरहितम् अनाहतालोकधाराप्रदर्शनं स्पष्टं प्रतीयते। एकत्रीभूताः क्रूराः सर्पाः अपि स्थिरप्रदीपतामादृतवन्त इति तारकासुरात् भयाधिक्यं प्रजापीड़ाधिक्यं च सूक्ष्मतया ध्वन्यते। रमणीयाऽपि रत्नदीपवर्णना अलकापूर्या प्रणयवर्णनाप्रसङ्गे। यथा-

**नीवीबन्धोच्छ्वसितशिथिलं यत्र विम्बाधराणां**
**क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु।**
**अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्**
**ह्रीमूढ़ानां भवति विफलप्रेरणा चूर्णमुष्टिः।।[2]**

अलकापूर्या प्रणयारम्भे प्रणयिनां चपलहस्तचालनेन प्रणयिनीनां नीवीबन्धः त्रुट्यते। प्रियेषु क्षौममाक्षिपत्सु लज्जमाना विम्बाधरा झटित्येव चूर्णमुष्टिं निक्षिप्य रत्नदीपनिर्वापणाय यतन्ते। दीप्तिप्रकर्षशोभितान् रत्नदीपान् प्राप्यापि चूर्णमुष्टिः विफलतां भजते। अत्र रत्नप्रदीपान् इति बहुवचनप्रयोगेण एकस्य दीपस्य निर्वापणप्रयत्नेऽपि अन्येषां प्रज्वलनात् तत्रस्थानां लज्जावनतानां नायिकानां प्रयत्नमूढता प्रतिपाद्यते। प्रणयलीलासु तासामीदृशी विफलचेष्टा प्रणयिनायकानां सहृदयपाठकानां च आनन्दानुभवाय कल्पते। अत्र अङ्गनानां रत्नप्रदीपनिर्वापणवृत्या मौग्ध्यं व्यज्यते इति मल्लिनाथः।

पुनरेका स्थिरदीपशिखावर्णनमां अग्निवर्णनृपतेः शिशिररात्रिषु सुरतवर्णनामाधारीकृत्य उपलभ्यते। यथा-

**अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु।**
**तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः।।[3]**

निवातकुक्षिषु गर्भवेश्मसु अर्पितस्तिमितदीपदृष्टयः सर्वसुरतान्तरक्षमाः शिशिररात्रयः तस्य साक्षितां ययुः। अत्र वातरहितेषु गृहान्तरेषु स्तिमितदीपदृष्टयः (स्तिमिता निश्चला दीपा एव दृष्टयो याभिः ताः) शिशिररात्रयः इति वर्ण दीपचित्रे नेत्रकल्पनाप्रयोगः काव्यशोभावर्धने शिशिररात्रिणां मानवीकरणाय कल्पते।

शिशिररात्रयः तापश्वेदादिरहितत्वात् दीर्घकालत्वात् च अग्निवर्णस्य रतिसुखास्वादनाय अभिनन्दनीया जाताः। निवातगृहेषु प्रदीपाः प्रज्वालिताः विराजन्ते स्म। अतः

1. कुमारसंभवम्,२.३८
2. मेघदूतम्,२.७
3. रघुवंशः,१९.४२

अनिमेषदीपदृष्ट्या शिशिररात्रय: राज्ञ: अग्निवर्णस्य सर्वेषामुपभोगयोग्यानां सुरतभेदानां साक्षितां ययु:। दीपं दीपशिखां च विहाय साधारणजनजीवने अनुभूतं ज्योतिरग्निधूमादीनां काव्यकल्पनाचित्रं कविना यथाकालं यथारुचि प्रदत्तम्। अग्नि: ईश्वरस्य स्वरुपमिति शकुन्तलानाटकस्य प्रथमश्लोके उक्तं यत् आकाशाग्निप्रभृतिभि: अष्टाभि: तनुभि: प्रपन्न: ईश: व: अवतु इति उक्तम्। परमपावनत्वात् 'वैतानास्त्वां वह्नय: पावयन्तु' इति शकुन्तलायै पतिगृहगमनकाले आशीर्वचनं दत्तम्[1]। 'ज्ञानमयेन वह्निना'[2] इति प्रयोगात् वह्नि: ज्ञानस्य स्वरूपमिति प्रदर्शितम्। शकुन्तला दिव्यसुषमाधारिणी आसीदिति तस्या: रूपं 'प्रभातरलं ज्योति:' इति कल्पितम्-मानुषीषु कथं वा स्यादस्य रुपस्य संभव:/न प्रभातरलं ज्यतिरुदेतिवसुधातलात्[3]। पितु: कण्वस्य अनुपस्थितौ अविज्ञातेन च गान्धर्वविधिना उपयम्य शकुन्तला दुष्यन्तहस्तं प्राप्ता। तपश्चर्यानन्तरं सोमतीर्थादागत्य कण्व: संपादितं वैवाहिकं कर्म यज्ञकर्म, दुष्यन्त: पावकस्वरूप: (पावक इति अग्नि:) शकुन्तला आहुतिस्वरूपा, स्वयं यजमान: इति कथयति-'दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एव आहुति: पतिता। वत्से! सुशिष्यपरिदत्ता वेद्येवाशोचनीयासि संवृता'[4]। धूमाग्निचित्रकल्पना रघो: राज्यप्राप्तिवर्णनावसरेऽपि लब्धा। सायंकाले सूर्येण निहितं तेज: प्रतिपद्य हुताशनो यथा अधिकं भवति तथा पित्राप्रदत्तं राज्यं प्राप्य रघु:- अधिकशोभी शक्तिशाली च बभूव। दिलीपानन्तरं राज्ये प्रतिष्ठितं तं (रघुम्) निशम्य अन्येषां राज्ञां हृदये पूर्व धूमाकुलितोऽग्नि: प्रज्वलित इव। राज्ञां सन्ताप: पूर्वेभ्योऽधिकं संजात: इति वर्णनायां धूमाग्निचित्रसंयोजनं सूचयति[5]। पुन: युद्धभूमौ अजस्य पराक्रमवर्णना प्रसङ्गे धूमाग्निचित्रसंयोजनं सहृदय-हृदयं जयति। शत्रुबलेन स्वसैन्ये भग्नेऽपि महापराक्रमी अज: अरिसैन्यं प्रत्येव ययौ। अत्र अजस्य वह्निस्वरूपकल्पना तस्य तेज: जिगीषां पराक्रमं च प्रतिपादयितुं समर्थ:। यत: वायुना धूम: शुष्कतृणसमूहादपसार्येत परन्तु यत्र यत्र शुष्क-तृणं (कक्ष:) तत्र तत्रैव वह्नि: प्रवर्तते। कविना एवं वर्णितम्-

**परेण भग्नेऽपि बले महौजा ययावज: प्रत्यरिसैन्यमेव।**
**धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्नि:॥**[6]

एवं अग्निधूमादीनां दीपदीपशिखादीनां च वर्णना काव्यनिर्माणे कवे: सूक्ष्मेक्षिकां प्रदर्शयति।

1. शाकुन्तलम्, ४.८
2. रघुवंश: ८.२०
3. अभिज्ञानशाकुन्तलम् १.२५
4. अभिज्ञानशाकुन्तलम् .४
5. रघुवंश:,४.१-२
6. रघुवंश:,७.५५

**उपसंहारः**- एवंविधासु प्रस्तुतासु विविधासु अवस्थासु मानवीयभावावेगः कविना दीपशिखाचित्रविधानप्रकारेषु निवेदितः। अग्निसंयोगात् दीपः स्वयं दीप्यते परं च दीपयति। आत्मनः विकासः जनकल्याणाय कल्पते इत्यस्माकं भारतीयसांस्कृतिकतत्त्वबोधः दीपशब्देन ध्वन्यते। वेदेऽपि अग्निः अतिशयेन शुद्धकर्मा, शुद्धमेधावी, शुद्धकविः (क्रान्तकर्मा, त्रिकालद्रष्टा) इति उक्तम् : 'अग्निः शुचिव्रततमः शुचिः विप्रः शुचिः कविः/शुचिरोचत आहुतः'(ऋग्वेदः,८.६.२) अतः दीपशिखाग्निः परमपावनभावमातनोतीति कविकालिदासेन काव्येषु दीपचित्रकल्पना बहुशः कृता। काव्यकलाकल्पनासु वर्णनक्रमे पर्वतेषु हिमालयः, नदीषु गङ्गा, ऋतुषु वसन्तः, नगरीषु उज्जयिनी, रसेषु श्रृङ्गारः, रीतिषु वैदर्भी, गुणेषु प्रसादः, अलंकारेषु उपमा, उपमासु दीपशिखा, छन्दसु मन्दाक्रान्ता कालिदासस्य परमप्रिया आसन् इति ज्ञायते। स्वतःस्फूर्तप्रवर्तितेषु अर्थालंकारचित्रेषु विविधभावराजीवराजिनामुन्मोचने कवेः सामान्यजनजीवनेभ्यः गृहीता धूमाग्निदीपशिखादिचित्ररेखा असाधारणप्रभाववाहिनी कृता। प्रबन्धप्रस्तुतदीपशिखाचित्रकल्पनासु यथोचितालंकाररसध्वनिविस्तारः सहृदय-हृदयसंवादी कृतः। अस्माकं सांस्कृतिकपवित्रता सर्वदा दीपशिखासु निहिता परिदृष्टा। अत एव दीपशिखाकालिदासः इति विरुदविभूषितो महाकविः पाठकोत्तमानां हृदयेषु सुचिरं राजते तमाम्।

## सहायकग्रन्थसूची


१. अभिज्ञानशाकुन्तलम् (कालिदासस्य). रमेन्द्रमोहनवोष संपादितम् कालकाटा मड़र्णबुकुएजेन्सि, १९७६

२. अमरकोषः(अमरसिंहस्य) विश्वनाथ झा-संपादितः दिल्ली : मोतिलालवनारसिदास, २०११

३. ऋग्वेद-संहिता (सायणभाष्यसहिता हिन्दी-भाषानुवादेन सह रामगोविन्दत्रिवेद संपादिता १-९ खण्डपरिमिता) वाराणसी, चौखम्बा विद्याभवन,२०११.

४. कालिदासकाव्यसौरभम् (के.सूर्यनारायणशास्त्रिविरचितम्). आन्ध्रप्रदेशः विजयलक्ष्मीमुद्राक्षरशाला-प्रग्गोदावरीड़िष्ट्रिक्ट,१९७३

५. कुमारसम्भवम् (कालिदासस्य), संजीवनीटीकया प्र.पाण्ड़ेय विरचितम्, वाराणसी : चौखम्बा विद्याभवनम्, १९७७

६. द प्रिनिस्पालउपनिषद्स (आङ्ग्लभाषयाऽनुवाद-संपादनम्, एस् राधाकृष्णन्). न्युयर्क, हारर्प एण्ड कलिनस् पब्लिसर्स, २०१२.

७. ध्वन्यालोकः (आनन्दवर्धनस्य), सानुवाद संपादना पंण्ड़ित कुलमणिमिश्रेण, भुवनेश्वरम्, ओड़शासाहित्य-एकादमी, १९९९

८. मेघदूतम् (कालिदासस्य). संजीवनीटीकयासह कुमुदरञ्जनरायसंपादितम् (षष्ठप्रकाशः)काल्काटाः प्रकाशकः कुमुदरञ्जनरायः, विवेकानन्दमार्गः, १९६८

९. रघुवंशः (कालिदासस्य ). संजीवनीटीकया सह श्रीकृष्टत्रिपाठिविरचितः, वाराणसीः, चौखम्बासुरभारतीप्रकाशनम्, १९७९

UGC - CARE Listed
जनवरी-मार्च, 2020

शोधप्रभा
वर्ष : 45, प्रथमोऽङ्कः

# आनन्दब्रह्ममीमांसा

**डॉ. रामचन्द्रशर्मा**

**'आनन्द'**!! - सृष्टि का मूल! स्वतः सिद्धसत्ता! स्वतः सिद्धचैतन्य! समग्र विश्व का केन्द्र! प्रत्येक विधा में अभिव्यक्त रस! चराचरजगत्स्पन्दन का मूलबिन्दु! अनन्त अभिव्यक्तियों के रूप में उच्छलित ज्योतिकलश! मधुमयी उल्लाससरिता का मूलोद्गम! रसस्वरूप स्वयम्प्रकाश परमात्मा! श्रुति निर्दिष्ट करती है-

**विज्ञानमानन्दं ब्रह्म, रातेर्दातुः परायणं, तिष्ठमानस्य तद्विदः।**[1]
**आनन्दो ब्रह्मेति व्यजानात्। खल्विमानि भूतानि जायन्ते,**
**आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति।**[2]

अतः यह जगत् आनन्द का एकं विशाल सागर है, जिसमें 'षड् रस' एवं 'नव रस' के रूप में आनन्द की तरङ्गें उच्छलित होती हुई जीवनवेलातट से टकराकर सुखानुभूतियों के आकार में विखर रही हैं। इसी सरित्पति से आत्मसूर्य द्वारा बाष्पायित कादम्बिनी के रूप में घिरते भावमेघ प्रेमामृतरस की वर्षा करते हुए उदात्तजीवनमूल्यरूपी हिमशृङ्गों से आनन्द-निर्झरिणियों को हृदय धरा पर कल्लोलायित करते हैं और जग उठता है एक ऐसा 'वेणुनाद' जिसमें डूबकर मन स्वतः सिद्धभाव से पूर्णता का बोध करता हुआ समुद्घोष कर उठता है-

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवाशिष्यते।।**[3]

वह पूर्ण है! क्योंकि 'आनन्द' की **'पराकाष्ठा'** है! **'स्वयम्प्रकाश' 'दृक्'** के रूप से शाश्वतभाव से विराजमान है! यह भी पूर्ण है! क्योंकि 'धर्मार्थकामरूप' 'त्रिवर्ग' के पूर्णताबोध को उद्भावित करता हुआ। 'परस्परभावन' की प्रक्रिया से निःसृत **'शाश्वतप्रेमामृतरस'** से आप्यायित है! एक ही सत्ता के परस्पराधिष्ठित दो स्वरूप हैं! पूर्ण से ही पूर्ण अभिव्यक्त हो सकता है, अपूर्ण पूर्ण को कैसे अभिव्यक्त करेगा। अपूर्ण एवं पूर्ण में विरोधिता है। अतः पूर्ण से ही पूर्ण अभिव्यक्त है। **'बिम्ब-प्रतिबिम्बभाव'** से दोनों की स्वरूप सत्ता है! अत एव दोनों ही

---

*सहायकाचार्य न्यायवैशेषिक विभाग, श्री. ला. ब. शा. रा. सं. वि., नई दिल्ली- 110016

1. बृहदारण्यकोपनिषद्- 3/9/28
2. तैतिरीयोपनिषद्- 3/6
3. ईशावास्योपनिषद् - शान्तिपाठः।

